THE

PRINCESS OF WALES

SARASVATĪ BHAVANA TEXTS

No. 61

---

THE

# DAKṢIṆĀMŪRTISAMHITĀ

# दक्षिणामूर्तिसंहिता

---

GOVERNMENT SANSKRIT LIBRARY,
BENARES.



Price, Rs.1-10.]

Saleable at half of the printed price.

THE

PRINCESS OF WALES

# SARASVATĪ BHAVANA TEXTS

*No. 61*

—o—

EDITED BY

M. D. SHASTRI, M. A., D. PHIL. ( OXON. ),

PRINCIPAL,

GOVT. SANSKRIT COLLEGE, BENARES

---

THE

# DAKṢIṆĀMŪRTISAMHITĀ

*Printed by Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

---

1937

* श्रीः *

श्रीविद्याराधनविषयप्रतिपादिका

# श्रीदक्षिणामूर्तिसंहिता

THE

# DAKṢIṆĀMŪRTISAṀHITĀ

EDITED WITH INTRODUCTION ETC.,

By

PT. NĀRĀYAṆA S'ĀSTRĪ KHISTE

Sāhityāchārya

Librarian, I/c. Mss. Department.

Govt. Sanskrit College Saraswati Bhavana

Benares.

1937

# FOREWORD

The present Volume embodies the text of the Dakṣiṇāmūrti-saṁhitā, a work on the S'rīvidyā section of the Āgama S'āstra. The importance of the work, as pointed out by its editor, lies in the detailed treatment of the Upāsanā Vidhi of S'rīvidyā or the Supreme goddess in the form of Tripurā, with some special features which are peculiar to it and are not found in any other work on the subject. The authoritativeness of the work is evident from the fact that it is often referred to by Bhāskara-rāya in his Saubhāgyabhāskara ( a Bhāṣya on the Lalitā-sahasra-nāma ) ; cp. the commentary on words भुवनेश्वरी, परंज्योतिः, पश्चमी etc,

Though called a Saṁhitā, the work does not deal with its subject matter in such a comprehensive manner as we find in the Tripurā-rahasya, the so-called Hāritāyana saṁhitā. Unlike the latter, it confines itself only to one aspect of the subject, the Arcā aspect and does not attempt to explain the philosophical background of the S'rīvidyā cult.

It is now being gradually realised that the modern Hinduism is an outcome of the fusion of the Nigama Dharma and Āgama Dharma. The fact that both these Dharmas originally represented two independent currents of ideas was clearly realized by the old Indian scholars who often used to describe themselves as

निगमागमपारदृश्वानः. But strangely enough the fact until recently was not clearly realized by the modern oriental scholars, with the result that, contrary to the Indian tradition, they over-emphasized the study of the Vedic literature and almost neglected the Āgamic side. Happily the importance of the latter study is now being brought home to modern scholars. Naturally the study of the subject, from the modern point of view, is only in its infancy A history of the Tāntric literature as well as culture is still a great desideratum. Until that is written, it is yet too early to hazard any view as to the stage at which the two cultures first began to influence each other or as to the extent of their mutual borrowing at any particular period of history.

But before any systematic attempt at writing a history of the above description is made, our first duty is to bring to light the vast literature on the subject that is still lying hidden. The merits of this edition should be chiefly viewed in this light. In the present editor fortunately we have one who has traditionally imbibed the spirit of this lore and who is, not only a votary of S'rīvidyā, but also an authority on the subject.

Sarasvati Bhavan,
31st. May, 1938.

M. D. SHASTRI,
PRINCIPAL,
Sanskrit College, Benares.

॥ श्रीः ॥

# दक्षिणामूर्तिसंहिताया भूमिका ।

जगद्वन्द्यपदाम्भोजान् श्रीविद्यादेशिकोत्तमान् ।
श्रीमद्भास्कररायाख्यान् भारतीदीक्षितान्नुमः ॥ १ ॥

अथायमुपक्रम्यते दक्षिणामूर्तिसंहितानामा श्रीविद्यातन्त्रग्रन्थो मुद्रयित्वा प्रकाशयितुम् । ग्रन्थश्चायमीश्वरदेवीसंवादात्मक इति श्रीदक्षिणामूर्तिरूप ईश्वर एवास्य प्रणेता, तत्सम्प्रदायानुयायिभिः स्वगुरुपरम्पराप्राप्ततत्त्वसङ्ग्रहात्मना ग्रथित इति च प्रतिभाति ।

यद्यपि श्रीपरशुरामकल्पसूत्र, नित्योत्सव, योगिनीहृदय, सेतुबन्ध, तन्त्रराज, वरिवस्याहृदयादयः श्रीविद्यातन्त्रग्रन्था मुद्रिताः प्रकाशितचराश्चोपलभ्यन्ते, तथापि दक्षिणामूर्तिसंहितायास्तेभ्यः किमपि परमं वैशिष्ट्यं जागर्त्येव ।

प्राचीनेषु श्रीविद्यातन्त्रनिबन्धेषु दक्षिणामूर्तिसंहिताया बहुत्र नामग्राहं समुल्लेखादस्याः प्राचीनत्वं प्रामाणिकत्वं च स्फुटमेव ।

पञ्चपञ्चिकास्थदेवतासु बहूनां मन्त्रोद्धारपूजाविधानादिनिरूपणम्, पञ्चसिंहासनविद्यामन्त्रोद्धारपूजाविध्यादिनिरूपणम्, घटार्गलयन्त्रसाधननिरूपणम्, पञ्चमीशकटयन्त्रोद्धार प्रयोगसाधनादिविधिनिरूपणम्, आम्नायविवरणम्, षोडशनित्यामन्त्रपूजाप्रयोगादिप्रतिपादनम्, महादेव्या होमबलिपूजाविशेषविधिनिरूपणं चेत्यादयोऽन्यत्र दुर्लभा विषया इह सम्यक् प्रपञ्चिता इति ग्रन्थस्यास्योपादेयता स्पष्टीभवति । पृथङ्मुद्रिते सूचीपत्रे ग्रन्थीयविषयाः साकल्येन प्रदर्शिता इति विशेषजिज्ञासुभिस्ते तत एवावगन्तव्याः ।

एतद्ग्रन्थप्रतिपादितोपासनप्रकारा श्रीविद्याऽपराख्या श्रीषोडशी

महात्रिपुरसुन्दरी किल दशमहाविद्याऽन्यतमाऽपि शक्तिचक्रसम्राज्ञी परदेवता ब्रह्मविद्येत्याख्यायतेऽभियुक्तैः। 'सा हि श्रीरमृता सताम्' इत्यादिश्रुतिप्रमाणैरप्यस्या अमृतकलात्मकत्वं ब्रह्मविद्यात्वं च बाढं स्पष्टं भवति।

किञ्च इयमेवात्मशक्तिरिति त्रिपुरारहस्यादावसकृदुपवर्णितमस्ति। आत्मज्ञानस्य फलं, 'तरति शोकमात्मवित्' इति श्रुत्या शोकोत्तीर्णतारूपमेव कथ्यते। तदेव फलमेतदुपासकानामपि भवतीति श्रीदेव्युपनिषदि......'य एनां वेद, स शोकं तरति, स शोकं तरति' इति द्विरुक्त्या स्पष्टं प्रतिपादितम्।

'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतिप्रतिपादितदिशा श्रवणमनननिदिध्यासनादिभिरात्मसाक्षात्कारं कामयमानानां कदाचिच्छ्रवणादिवैकल्ये सत्यात्मदर्शनं न स्यात् शोकोत्तीर्णता च न सम्भवेत्।

न चैकस्मिन् जन्मनि सर्वेषां श्रवणमननादीनि साकल्येन सम्पाद्यात्मसाक्षात्कारः सुशकः। इत्थं च बहुजन्मबह्वायासपरम्परासाध्योऽयं श्रवणादिद्वारक आत्मसाक्षात्कारमार्गः। साक्षादात्मोपासनामार्गमेवंविधसङ्कटसमाकुलं दृष्ट्वैव दयामयी भगवती श्रुतिरात्मशक्त्युपासनामार्गं पूर्वापेक्षया सुकरं निर्दिशन्ती, तेन च पथा शोकोत्तीर्णतालाभस्य निश्चिततां ध्वनयितुमेव 'स शोकं तरति' इति द्विवारमुच्चैरुद्घोषयत्। शक्तिशक्तिमतोरविनाभावेनात्मशक्त्युपासकानामात्मलाभः सुशक एव। आत्मलाभात्परं किमपि लब्धव्यं नावशिष्यते। तथा चोक्तं बाहुजकुलदावानलैः परमशिवान्तेवासिभिराराधितश्रीचरणैः श्रीपरशुरामभट्टारकश्रीपादैः स्वीये कल्पसूत्रे—'आत्मलाभान्न परं विद्यते' इति।

एतावता आत्मशक्तिस्वरूपायाः श्रीविद्याया उपासनया शोकोत्तीर्णतात्मकमुक्तिरूपं फलं सुलभं भवतीत्यत्र भगवती श्रुतिरेव मुख्यं

प्रमाणम् । श्रुत्यनुप्राणितेषु तन्त्रेषु पुराणेषु च श्रीविद्याया भुक्तिमुक्तिप्रदत्वमसकृदुद्घोषितम् ।

प्रसिद्धा चेयमभियुक्तोक्तिः—

यत्रास्ति भोगो न च तत्र मोक्षो
यत्रास्ति मोक्षो न च तत्र भोगः ।
श्रीसुन्दरीसेवनतत्पराणां
भोगश्च मोक्षश्च करस्थ एव । इति ।

यच्च केचित् श्रीचक्रश्रीविद्योपासनादीनां केवलतन्त्रानुमतत्वमभिप्रयन्ति, तैः 'तिस्रः पुरस्त्रिपथा विश्वचर्षणीर्यत्राकथा अक्षराः सन्निविष्टाः । अधिष्ठायैनामजरा पुराणी महत्तरा महिमा देवतानाम् ।.........इत्यादि, 'कामो योनिः कमला वज्रपाणिः' इत्यादिका च ऋग्वेदान्तर्गतशाङ्खायनारण्यकश्रुतिरवश्यमनुसन्धेया । सावधानतया च द्रष्टव्यं श्रीमद्भास्कररायभारतीदीक्षित श्रीचरणप्रणीतं तद्भाष्यम् । किञ्च वैदिकमूर्धन्यानां श्रीशंकरभगवत्पादानां श्रीविद्यात्रिशतीस्तोत्रभाष्यकरणं, प्रपञ्चसाराख्यतन्त्रनिर्माणमद्यावधि श्रीशंकरमठेषु श्रीविद्योपासनं श्रीचक्रपूजनं च तैर्न विस्मर्तुं योग्यम् ।

एतावता श्रुतिप्रतिपादितोपासनायाः श्रीविद्याया उपासनाप्रकारविशेषप्रतिपादिकेयं दक्षिणामूर्तिसंहिता समुपादेयेत्यत्र नास्ति सन्देहलेशः ।

एतन्मुद्रणं च सरस्वतीभवनस्थपुस्तकद्वयाधारेण सम्पन्नम् । तत्रैकं १—१११ पत्रात्मकम्, ११ × ५२–परिमाणं 'क' संज्ञम् । द्वितीयं २—५२ पत्रात्मकम्, २, ३, × ४, १–परिमाणं 'ख' संज्ञम् । तत्र 'क' संज्ञकमेव समीचीनमित्यादर्शत्वेन संस्थाप्य 'ख' संज्ञकस्य पाठान्तराणि संगृहीतानि ।

दुरवगाहेऽस्मिन् ग्रन्थे यथामति कृतपरिश्रमस्यापि मे सम्भवन्ति बहूनि स्खलितानि, तानि दयालवः सुधियो मर्षयन्त्वित्यभ्यर्थये ।

विगते वत्सरे तत्कालीनैः काशिकराजकीयपाठालयप्रधानाध्य-क्षैर्महामहोपाध्याय पूज्यपादश्रीगोपीनाथ कविराज महोदयैः समादिष्टोऽहमेतद्ग्रन्थसम्पादने प्रावर्तिषि । सम्प्रति वर्तमानपाठालयप्रधानाध्यक्षप्रभुवरडॉ०मङ्गलदेवशास्त्रि एम्. ए. डी. फिल्. महोदयानामध्यक्षतायामवसितमेतत्सम्पादनम् । उभयोरपि प्राच्यनव्यप्रभुवरयोरुपदेशेन दिग्दर्शनेन समुत्तेजनेन च प्राभवं कार्यमेतत्कर्तुमिति मान्यवरयो रुभयोरपि प्रभुवरयोः कृतज्ञतां शिरसा वहामि ।

पर्यवसाने मामकीनेनानेन प्रयत्नेन सर्वान्तर्यामिणी परब्रह्मणोऽनुग्रहशक्त्यात्मिका परदेवता श्रीः प्रीयतामिति प्रार्थये ।

शिवादिमाम्बानन्दान्तगुरुमण्डलरूपिणी ।
प्रीणातु सच्चिदानन्दविग्रहा श्रीः परा चितिः ॥ १ ॥

सरस्वतीभवनम्, काशी,
कुशग्रहणी
भाद्र० कृ० १५–शनौ संवत् १९९४
४—९—३७

विदुषां वशंवदः
**नारायणशास्त्री खिस्ते**

दक्षिणामूर्तिसंहितायां

# विषयानुक्रमणिका।

# श्रीदक्षिणामूर्तिसंहिता ।

## अथ प्रथमः पटलः ।

श्रीमच्छ्रीकोशहृदयं पञ्चसिंहासनात्मकम् ।
फलं कल्पलतानाञ्च चारुरत्नस्फुरत्कलम् ॥ १ ॥
चतुरायतनानन्दि चतुरन्वयकोशगम् ।
नित्यानन्दि परं ब्रह्म धाम नौमि सुखाप्तये ॥ २ ॥

श्रीदेव्युवाच—

कृपां कुरु महादेव कृपयानन्दसुन्दर ।
किन्तु ब्रह्ममयं धाम श्रोतुमिच्छामि तत्त्वतः ॥ ३ ॥
कथं श्रीसहितं देव श्रीकोशहृदयं कथम् ।
पञ्चसिंहासनैः सेव्यं कथं कल्पलतात्मकम् ॥ ४ ॥
कथं रत्नात्मकं देव कथमायतनात्मकम् ।
कथमाम्नायसंसेव्यं कथं नित्यात्मकं प्रभो ॥ ५ ॥

ईश्वर उवाच—

एतत्सर्वात्मकं ब्रह्म त्रिपुरा परमेश्वरी ।
चतुर्लक्ष्मीसेव्यमाना सदा कामदुघा वरा ॥ ६ ॥

श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ।
त्रिशक्तिः सर्वसाम्राज्यलक्ष्मीः पञ्च प्रकीर्त्तिताः ॥ ७ ॥
बरुणान्तं वह्निसंस्थं दीर्घनेत्रविभूषितम् ।
विन्दुनादावृतं बीजं लक्ष्मीमन्त्र उदाहृतः ॥ ८ ॥
ऋषिर्भृगुर्निचृच्छन्दस्तथा श्री र्देवता प्रिये ।
शतुर्ये वजिशक्ती च कीलकं रेफ उच्यते ॥ ९ ॥
द्वितीयेन चतुर्थेन षष्ठेनार्णेन सुन्दरि ।
इन्द्रेण चन्द्रकलया विद्याममोमनुस्वरैः ॥ १० ॥
षडङ्गानि न्यसेन्मन्त्री हृच्छिरश्च शिखान्ततः ।
कवचं नेत्रमस्त्रं च नमः स्वाहा क्रमेण च ॥ ११ ॥
वषट् हुं वौषडस्त्रं तु फडेभिः सह विन्यसेत् ।
अष्टपत्रं लिखेत्पद्मं वहिर्भूविम्बमालिखेत् ॥ १२ ॥
मध्ये पुष्पं विनिाक्षिप्य पीठशक्तीः समर्चयेत् ।
विभूतिरुन्नतिः सृष्टिस्तुष्टिः कीर्त्तिश्च सधृतिः ॥ १३ ॥
पुष्टिरुत्कृष्टिऋद्धिश्च वसुदिक्षु प्रपूजयेत् ।
मध्ये सिंहासनं पूज्यं सर्वशक्तिमयं प्रिये ॥ १४ ॥
ध्यायेत्ततः श्रियं रम्यां सर्वदेवनमस्कृताम् ।
तप्तकार्त्तस्वराभासां दिव्यरत्नविभूषिताम् ॥ १५ ॥
आसिच्यमानाममृतैर्मुक्तारत्नद्रवैरपि ।
शुभ्राभ्राभेभयुग्मेन मुहुर्मुहुरपि प्रिये ॥ १६ ॥

रत्नौघमूर्द्धमुकुटां शुद्धक्षौमाङ्गरागिणीम् ।
पद्माक्षीं पद्मनाभेन हृदि चिन्त्यां स्मरेद् बुधः ॥ १७॥
एवं ध्यात्वा यजेद्देवीं पद्मपुष्पधरां सदा ।
वरदाभयशोभाढ्यां चतुर्वाहुं सुलोचनाम् ॥ १८ ॥
आवाहनादिमुद्राश्च क्रमेणैव प्रदर्शयेत् ।
ऊद्ध्वीञ्जलिमधःकुर्य्यादियमावाहनी भवेत् ॥ १९ ॥
इयं तु विपरीता स्यात्तदा वै स्थापनी भवेत् ।
उर्ध्वाङ्गुष्ठौ मुष्टियुगं तदेयं सन्निधापनी ॥ २० ॥
अन्तरङ्गुष्ठमुष्टिभ्यां तदेयं सन्निरोधनी ।
तर्जनीभ्यां परिभ्राम्य सकलीकरणं भवेत् ॥ २१ ॥
अञ्जलिञ्चाध्र्यवत्कृत्वा परमीकरणं भवेत् ।
परिवर्त्य करौ मन्त्री तर्जनी च कनिष्ठिके ॥ २२ ॥
मध्यमानामयुगले स्थापयेत्तु परस्परम् ।
अमृतीकरणं देवि मुद्रेयं धेनुरूपिणी ॥ २३ ॥
एताः सामान्यमुद्रास्तु दर्शयित्वा यजेत्प्रिये ।
गन्धपुष्पादिभिः सम्यक्सर्वकामार्थसिद्धये ॥ १४ ॥
अग्नीशासुरवायव्यमध्यदिक्ष्वंगपूजनम् ।
बलाका विमला चैव कमला वनमालिका ॥ २५ ॥
विभीषिका मालिका च शाङ्करी वसुमालिका ।
पुरस्ताद्दिक्क्रमेणैव प्रादक्षिण्येन पूजयेत् ॥ २६ ॥

इन्द्राग्नियमनैऋत्य वरुणानिलसंज्ञकान् ।
कुबेरेशानलोकेशान् भूबिंबे च क्रमाद्यजेत् ॥ २७ ॥
ब्रह्मा विष्णुश्च लोकेशश्चोर्द्ध्वाधः क्रमतो यजेत् ।
अर्कलक्षं जपेन्मंन्त्रं तद्दशांशेन होमयेत् ॥ २८ ॥
पद्मैस्त्रिमधुमिश्रैस्तु पुरश्चारी ततो भवेत् ।
एवं संसिद्धमन्त्रस्तु सर्वसाम्राज्यदो भवेत् ॥ २९ ॥

इति श्रीदाक्षिणामूर्त्तिसंहितायां एकाक्षरलक्ष्मी-
पूजाविधिः प्रथमः पटलः ।

## अथ द्वितीयः पटलः ।

ईश्वरउवाच—

अथ वक्ष्ये महेशानि लक्ष्मीहृदयमुत्तमम् ।
यस्य विज्ञानमात्रेण पलायन्ते महापदः ॥ १ ॥
प्रणवं पूर्वमुच्चार्य्य हरेमात्मकमुच्चरेत् ।
श्रीपुटं चाथ कमले कमलालये प्रसीद च ॥ २ ॥
लायेमध्यगतां भूमिं रुद्रस्थाने तु योजयेत् ।
प्रसीद पूर्वबीजानि सम्पुटत्वेन योजयेत् ॥ ३ ॥
महालक्ष्मीहृदंतोयमष्टाविंशतिवर्णवान् ।
दक्षः प्रजापतिश्चास्य ऋषिश्छन्दस्तथैव च ॥ ४ ॥

गायत्री देवता लक्ष्मीहृदयं परिकीर्तितम् ।
द्वितीयं च तृतीयं च बीजशक्तिक्रमेण च ॥ ५ ॥
प्रणवः कीलकं देवि ततोऽङ्गानि प्रविन्यसेत् ।
अङ्गानि पूर्ववद्देवि न्यसेन्मंत्री समाहितः ॥ ६ ॥
रत्नोद्यतसुपात्रन्तु पद्मयुग्मं च हेमजम् ।
अग्ररत्नावलीराजदादर्शं दधतीं परम् ॥ ७ ॥
चतुर्भुजां स्फुरद्रत्ननूपुरां मुकुटोज्वलाम् ।
ग्रैवेयांगदहाराढ्यां कङ्कतीरत्नकुण्डलाम् ॥ ८ ॥
पद्मासनसमासीनां दूतीभिर्मंडितां सदा ।
शुक्लांगरागवसनां महादिव्यांगनानताम् ॥ ९ ॥
एवं ध्यात्वार्चयेद्देवीं पूर्वयन्त्रे च पूर्ववत् ।
आदावंगानि सम्पूज्य पूर्ववत्परमेश्वरी ॥ १० ॥
भारतीं पार्वतीं चान्द्रीं शचीं दिक्षु प्रपूजयेत् ।
श्रीधरश्च हृषीकेशो बैकुण्ठो विश्वरूपधृक् ॥ ११ ॥
विदिक्षु पूजयेदेतान् सर्वसिद्ध्यर्थहेतवे ।
अनुरागो विसंवादो विजयो वल्लभो मदः ॥ १२ ॥
हर्षो बलं च तेजस्वी पुर आरभ्य पूजयेत् ।
इन्द्रादयश्च सम्पूज्याः पुनर्देवीं यजेत्सुधीः ॥ १३ ॥
लक्षत्रयं जपेन्मन्त्रं नियमेन तु साधकः ।
तद्दशांशेन पद्मैस्तु हुनेत्सम्पत्तिमिच्छता ॥ १४ ॥

महागजतुरङ्गाश्च जायन्ते तस्य मन्दिरे ।
सुवर्णरत्नभूषादिमण्डितः साधको भवेत् ॥ १५ ॥

इति दक्षिणामूर्तिसंहितायां महालक्ष्मीपूजाविधिर्नाम-
द्वितियः पटलः ।

## अथ तृतीयः पटलः ।

ईश्वर उवाच—

त्रिशक्तियजनं बक्ष्ये सर्वसिद्धिप्रदं नृणाम् ।
श्रीवीजं च परावीजं कामवीजं समालिखेत् ॥ १ ॥
इयं त्रिशक्तिर्देवेशि त्रिषु लोकेषु दुर्लभा ।
ऋषिर्ब्रह्मास्य गायत्री छन्दोऽपि कथिताम्प्रिये ॥ २ ॥
अथ यंत्रं प्रवक्ष्यामि साधकानां हिताय च ।
षट्कोणं पूर्वमालिख्य मध्ये तु विलिखेत्सुधीः ॥ ३ ॥
वीप्सया तान्तु षट्कोणकोणेषु क्रमतो यजेत् ॥ ४ ॥
बाह्ये वसुदलं कुर्य्यात् दीर्घस्वराविभूषितम् ।
चतुरस्रं चतुर्द्वारभूषितम्मंडलं लिखेत् ॥ ५ ॥
मध्ये समावाह्य देवीं ध्यायेत्सर्वसमृद्धिदाम् ।
नवहेमस्फुरद्भूमौ रत्नकुट्टिममण्डपे ॥ ६ ॥

महाकल्पवनान्तस्थे रत्नसिंहासने वरे ।
कमलासनशोभाढ्यां रत्नमंजीररंजिताम् ॥ ७ ॥
स्फुरद्रत्नलसन्मौलिं रत्नकुंडलमंडिताम् ।
अनन्तरत्नघटित नानाभूषणभूषिताम् ॥ ८ ॥
दधतीं पद्मयुगलं पाशांकुशधनुःशरान् ।
षड्भुजामिन्दुवदनां दूतीभिः परिवारिताम् ॥ ९ ॥
चारुचामरहस्ताभां रत्नादर्शसुपाणिभिः ।
ताम्बूलस्वर्णपात्राभिर्भूषापेटिसुपाणिभिः ॥ १० ॥
तप्तकार्त्तस्वराभासां पूर्वोक्ते मण्डले यजेत् ।
उपचारैः समाराध्य ततोंगावरणीं यजेत् ॥ ११ ॥
पूर्ववत्परमेशानि परिवारांस्ततो यजेत् ।
लक्ष्मीं हरिं च गिरिजां शिवं रत्यङ्गजौ क्रमात् ॥१२॥
अग्रकोणादि सम्पूज्य ततः षट्कोणपार्श्वयोः।
शङ्खपद्मनिधी पूज्यौ वसुपत्रेषु मातरः ॥ १३ ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुंडा सप्तमी भवेत् ॥ १४ ॥
महालक्ष्मीर्महादेवी पुरस्तादि प्रपूजयेत् ।
इन्द्रादयस्तु सम्पूज्याः कामिनीरूपधारिणः ॥ १५ ॥
उत्तुंगा यौवनोन्मत्ता देव्याराधनगर्विताः ।
लक्षत्रयं जपेन्मंत्री नियमेन जितेन्द्रियः ॥ १६ ॥

तद्दशांशेन देवेशि किंशुकैर्होमयेत्सुधीः ।
अनेन विधिना मन्त्री पुरश्चारी भवेत्प्रिये ॥ १७ ॥

इति दक्षिणामूर्तिसंहितायां त्रिशक्तिमहालक्ष्मीयजनविधिस्तृतीयः पटलः ।

## अथ चतुर्थः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महादेवि सर्वसाम्राज्यदेवताम् ।
यस्या आराधने विष्णुरभूल्लक्ष्मीपतिः स्वयम् ॥ १ ॥
चन्द्रेणमादनक्ष्मेशवह्निदीर्घाक्षिमण्डितम् ।
विन्दुक्रूरेश्वरीयुक्तं विधेयं वैष्णवी प्रिये ॥ २ ॥
श्रीवीजसंयुतं कुर्य्यात्सर्वसाम्राज्यदायिनी ।
ऋषिर्हरिस्तथा छन्दो गायत्री चास्य सम्मता ॥३॥
देवता मोहिनी लक्ष्मीर्महासाम्राज्यदायिनी ।
वीजं कूटं समाख्यातं शक्तिः श्रीबीजमुच्यते ॥४॥
षड्भिराद्यस्वरैर्विद्वान्षडङ्गानि प्रविन्यसेत् ।
अतसीपुष्पसङ्काशां रत्नभूषणभूषिताम् ॥ ५ ॥
शङ्खचक्रगदापद्मशार्ङ्गवाणधराङ्करैः ।
षड्भिः कराङ्गं देवेशि वरदाभयशोभिताम् ॥ ६ ॥

एवमष्टभुजां ध्यात्वा त्रिलक्षं प्रजपेत्सुधीः
तद्दशांशेन पद्मैस्तु हुनेत्साम्राज्यसिद्धये ॥ ७ ॥
जितेन्द्रियः सविधिवत् यन्त्रोद्धारं शृणु प्रिये।
त्रिकोणं चाष्टपत्रं च भूबिम्बं च ततो लिखेत् ॥८॥
चतुर्द्वारातिशोभाढ्यं यन्त्रमेतत्समालिखेत्।
अस्मिन्समावाह्य देवीं पूजयेदुपचारकैः ॥ ९ ॥
पूर्ववत्परमेशानि षडङ्गावरणं यजेत्।
गायत्री चैव सावित्री सरस्वत्यग्रभागतः ॥ १० ॥
क्रमेण पूजयेन्मन्त्री ब्रह्माद्यांश्च स्वरैः पृथक्।
अष्टपत्रेषु भूबिम्बे त्वेकोच्चारेण पूजयेत् ॥ ११ ॥
अष्टादशमहाकोटियोगिनीभ्यो नमो लिखेत्।
अनेन मन्त्रतः पश्चादिन्द्रादीन्पूजयेत् ततः ॥ १२ ॥
पुनर्देवीं समभ्यर्च्य गन्धपुष्पाक्षतादिभिः।
बटुकक्षेत्रपालेभ्यो योगिनीभ्यो वलिं हरेत् ॥ १३ ॥

इति दक्षिणामूर्तिसंहितायां साम्राज्यदाविद्यायजनाविधि-
श्चतुर्थः पटलः।

## अथ पञ्चमः पटलः ।

### ईश्वर उवाच—

अथ श्रीकोशविद्यानां चतुष्कं शृणु पार्वति ।
यस्य विज्ञानमात्रेण पुनर्जन्म न विद्यते ॥ १ ॥
श्रीविद्या च परंज्योतिः परनिष्कलदेवता ।
अजपा मातृका चैव पञ्च कोशाः प्रकीर्त्तिताः ॥ २ ॥
प्रणवं पूर्वमुच्चार्य्य परां हंसपदं लिखेत् ।
ततः सोऽहं शिरो देवि वसुवर्णेयमीरिता ॥ ३ ॥
प्रणवाच्चित्कला ज्ञेया मायया व्याप्तिरूपिणी ।
हंसपदेन देवेशि साक्षादात्मस्वरूपिणी ॥ ४ ॥
तत्रत्यविन्दुत्रितयात् सृष्टिस्थितिलयात्मिका ।
प्रसृते विन्दुनाऽऽद्येन वामेयं ब्रह्मरूपिणी ॥ ५ ॥
बिन्दुनाऽथ द्वितीयेन पालयन्ती जगत्त्रयम् ।
ज्येष्ठेयं वैष्णवी माया चाद्या सत्त्वगुणा प्रिये ॥ ६ ॥
अन्येन विन्दुना सर्वं ग्रसन्ती तमसा वृता ।
रौद्री विंदुत्रयं देवि प्रसृतैकात्मिका तदा ॥ ७ ॥
आत्मानं दर्शयत्येषा हंसाख्या संहतिर्यदा ।
तदेयं दर्पणाकारा ततो ज्योतिर्मयी भवेत् ॥ ८ ॥
वर्णाभ्यां वह्निजायायाः परंज्योतिरिति प्रिये ।
एवं धिया जपेन्मत्री साक्षाद्ब्रह्म भवेत्तु सः ॥ ९ ॥

ऋषिर्ब्रह्माऽस्य मन्त्रस्य गायत्री छन्द उच्यते ।
परं ज्योतिर्मयी साक्षाद्देवता परिकीर्त्तिता ॥ १० ॥
प्रणवान्ते द्वयं वीजं शक्तिः शेषं तु कीलकम् ।
स्वाहा तद्‌हृद्वयं सोहं शिरो हंसः शिखा भवेत् ॥११॥
मायया कवचं तारबीजेन नयनत्रयम् ।
व्यष्ट्या मन्त्रेण देवेशि समग्रेणास्त्रकं भवेत ॥ १२ ॥
ज्ञानाग्नौ मातृकावर्णहविषा चाक्षराहुतिम् ।
अनेन मन्त्रेण जुहुयात्क्षणान्निर्वाणगो भवेत् ॥ १३ ॥

इति दक्षिणामूर्तिसंहितायां आत्माष्टाक्षरपरंज्योति-
र्विद्याराधनं पञ्चमः पटलः ।

---

## अथ षष्ठः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि परनिष्कलदेवताम् ।
यस्याः स्मरणमात्रेण चिरानन्दायते तनुः ॥ १ ॥
अनुग्रहादिर्देवेशि विन्दुनादकलात्मिका ।
परनिष्कलदेवीयं परब्रह्मस्वरूपिणी ॥ २ ॥
शुक्लाम्बरपरीधाना शुक्लमाल्यानुलेपना ।
ज्ञानमुद्राङ्किता योगिपतिवृन्देन सेविता ॥ ३ ॥

ऋषिर्ब्रह्माऽस्य गायत्री मनोश्छन्दः क्रमाद्वदेत् ।
ब्रह्मैव देवतावीजं शक्तिस्तत्र क्रमेण तु ॥ ४ ॥
मकारः कीलकं मोक्षफलदा ज्ञानरूपिणी ।
स्वरद्वन्द्वस्य मध्ये तु क्षिप्त्वा त्यक्त्वा चतुष्टयम् ॥५॥
ऋ ॠ ऌॡच देवेशि षडङ्गानि प्रविन्येसत् ।
ततो यन्त्रं लिखेन्मन्त्री त्रिकोणं चाष्टपत्रकम् ॥
चतुरस्रं चतुर्द्वारं मण्डितं ज्ञानदं भवेत् ।
ब्रह्मरन्ध्रे विचिन्त्यैतत्तत्रावाह्य परमेश्वरीम् ॥ ७ ॥
गन्धपुष्पादिभिः सम्यक् मनोज्ञैरुपचारकैः ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ ८ ॥
हकारेण च ऋग्रूपं ब्रह्माणं पुरतो यजेत् ।
सामवेदेन सहितं सकारेण हरिं यजेत् ॥ ९ ॥
देव्या दक्षिणतः पश्चादन्त्यकोणे शिवं यजेत् ।
यज्ञस्वरूपकालेन त्रिकोणे कथितम्प्रिये ॥ १० ॥
अष्टपत्रे चतुर्दिक्षु पुरस्तादिक्रमेण तु ।
आत्मा परात्मा परमज्ञानात्मानो यजेत्क्रमात् ॥११॥
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिचतुष्टयम् ।
विदिक्षु पूजयन्मन्त्री ततो ब्रह्मादिकान्यजेत् ॥१२॥
तेष्वेव वसुपत्रेषु चतुरस्रे ततः परम् ।
इन्द्रादिलोकपालांश्च पूर्वादिक्रमतो यजेत् ॥१३॥

गन्धपुष्पादिनैवेद्यतर्पणैः परितोषयेत् ।
ब्रह्मरूपो भवेन्मन्त्री मोक्षस्तस्य करे स्थितः ॥ १४ ॥

इति दक्षिणामूर्तिसंहितायां प्रणवविद्यापरनिष्कलभेदेन
समाराधनं षष्ठः पटलः ।

## अथ सप्तमः पटलः ।

ईश्वर उवाच—

अजपाराधनं वक्ष्ये कथयामि तवानघे ।
यस्य विज्ञानमात्रेण परं ब्रह्मैव देशिकः ॥ १ ॥
हंसः पदं परेशानि प्रत्यहं जपते नरः ।
मोहबद्धो न जानाति मोक्षस्तस्य न विद्यते ॥ २ ॥
श्रीगुरोः कृपया देवि ज्ञायते जप्यते तदा ।
उच्छ्वासनिःश्वासतया बन्धमोक्षकृता भवेत् ॥ ३ ॥
उच्छ्वासे चैव निःश्वासे हंस इत्यक्षरद्वयम् ।
तस्मात्प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ॥ ४ ॥
एकविंशतिसाहस्रं षट्शताधिकमीश्वरि ।
जपते प्रत्यहं प्राणिस्पन्दानन्दमयीं पराम् ॥ ५ ॥
उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ।
विना जपेन देवेशि जपो भवति मन्त्रिणः ॥ ६ ॥

अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ।
श्रीगुरोः कृपया देवि लभ्यते नान्यथा प्रिये ॥ ७ ॥
एवं जपं महेशानि प्रत्यहं विनिवेदयेत् ।
गणेशब्रह्मविष्णुभ्यो हराय च परेश्वरि ॥ ८ ॥
जीवात्मने क्रमेणैव तथा च परमात्मने ।
षट्शतानि सहस्राणि षडेव च तथा पुनः ॥ ९ ॥
षट्सहस्राणि विमले सहस्रं चैवमेव हि ।
पुनः सहस्रं गुरवे क्रमेण तु निवेदयेत् ॥ १० ॥
आधारे श्वेतवर्णेऽस्मिन्वादिशान्तानि संस्मरेत् ।
हृतसौवर्णवर्णानि वर्णानि परमेश्वरि ॥ ११ ॥
स्वाधिष्ठाने विद्रुमाभे वादिलान्तानि संस्मरेत् ।
विद्युत्पुञ्जप्रभाभानि सलिले मणिपूरके ॥ १२ ॥
शडफान्तानि महानीलप्रभाणि च विचिन्तयेत् ।
पिङ्गवर्णे महावह्निकार्णिकाभानि चिन्तयेत् ॥ १३ ॥
कादिठान्तानि वर्णानि चतुर्थेऽनाहते प्रिये ॥ १४ ॥
विशुद्धौ धूम्रवर्णे तु रक्तवर्णान्स्वरान् यजेत् ।
आज्ञायां विद्युदाभायां शुभ्रौ हस्तौ विचिन्तयेत् ।
कर्पूरद्युतिसंराजत्सहस्रदलनीरजे ॥ १५ ॥
नादात्मकं ब्रह्मरन्ध्रे जानीहि परमेश्वरि ।
एतेषु सप्तचक्रेषु स्थितेभ्यः परमेश्वरि ॥ १६ ॥

जपं निवेदयेद्देवमहोरात्रभवम्प्रिये ।
सहजं परमेशानि न्यासं कुर्य्याद्विचक्षणः ॥ १७ ॥
ऋषिर्हंसोऽव्यक्तमूर्त्ति गायत्रं छन्द उच्यते ।
देवता परमादिस्थहंसो हं वीजमुच्यते ॥ १८ ॥
सं शक्तिः कीलकं सोहं प्रणवस्तत्त्वमेव हि ।
उदात्तस्वर इत्येवं मनोरस्य प्रकीर्तितः ॥ १९ ॥
मोक्षार्थे विनियोगः स्यादेवं जानीहि पार्वती ॥ २० ॥
ततः षडङ्गविन्यासं कुर्यादेहस्य सिद्धये ॥ २१ ॥
सूर्य्यं सोमं तथा देवि निरञ्जनमतः परम् ।
निराभासं चतुर्थ्यन्तं स्वाहान्तं क्रमतो न्यसेत् ॥२९॥
कवचान्तान्प्रविन्यस्य ततोऽनन्तपदं स्मरेत् ।
तन्नः सूक्ष्मचतुर्वर्णानुक्त्वा देवी प्रचोदयात् ॥ २२ ॥
स्याहान्तेनैव नयनमव्यक्तपदपूर्वकम् ।
प्रबोधात्मा चतुर्थ्याऽग्निजायान्तोऽस्त्रो निगद्यते ॥२३॥
प्राणायामस्य विधिवन्मन्त्री सम्यक्समासतः ।
मूलमन्त्रेण देवेशि वामेनापूर्य्य चोदरम् ॥ २४ ॥
कुम्भकेन त्रिरावृत्त्या दक्षिणेन च रेचयेत् ।
कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ॥२५॥
प्राणायामः स विज्ञेयः तर्जनीमध्यमे विना ।
अस्य हंसस्य देवेशि निर्गमागमपक्षकौ ॥ २६ ॥

अग्नीषोमावपो वापि पक्षौ तारः शिरो भवेत् ।
बिन्दुत्रयं शिखानेत्रे मुखे नादः प्रतिष्ठितः ॥ २७ ॥
शिवशक्तिपदद्वन्द्वकालाग्निपार्श्वयुग्मकम् ।
अयं परमहंसस्तु सर्वव्यापिप्रकाशवान् ॥ २८ ॥
सूर्य्यकोटिप्रतीकाशः स्वप्रकाशेन भासते ।
संहाररूपी हंसोऽयं विवेकं दर्शयत्यपि ॥ २९ ॥
अजपां जपतो नित्यं पुनर्जन्म न विद्यते ॥ ३० ॥
षट्शतान्यधिकान्यत्र सहस्राण्येकविंशतिः ।
अहोरात्रं चरेद्वायुः स जपो मोक्षदायकः ॥ ३१ ॥

इति दक्षिणामूर्तिसंहितायां अजपाविधानं नाम
सप्तमः पटलः ।

## अथ अष्टमः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि मातृकां लोकमातरम् ।
अकारादिक्षकारान्तां वर्णावयवदेवताम् ॥ १ ॥
ऋषिर्ब्रह्मास्य देवस्य गायत्रं छन्द उच्यते ।
मातृका देवता देवि हलो वीजानि शक्तयः ॥ २ ॥

स्वरास्तु परमेशानि जाता व्यक्तिस्तु कीलकम्।
अनिर्वाच्या हलो वर्णाः शक्त्या व्यक्ता भवन्ति हि ॥३॥
शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते।
असद्रूपा हलो वर्णाः शक्त्याऽऽसन्नाः पराङ्मुखाः॥४॥
स्फुरन्मात्रास्तदोच्चार्य्याः सम्मुखा व्यक्तवर्णकाः।
ऋ ॠ ऌ ॡ परित्यज्य षड्युग्मस्वरमध्यगाः॥ ५ ॥
वर्गाः षट् च क्रमेणैव सप्तमः क्रोधसंयुतः।
अन्ते निक्षिप्य देवेशि षडङ्गानि प्रविन्यसेत्॥ ६ ॥
कलापत्राम्बुजे कण्ठे स्वरान्सम्यक् प्रविन्यसेत्।
हृद्यर्कपत्रे तद्वर्णान्नाभौ दशदले न्यसेत्॥ ७ ॥
दशवर्णांल्लिङ्गमध्ये षड्दले षट् तथेश्वरि।
चतुर्दले तथाऽऽधारे चतुर्वर्णांस्ततो न्यसेत्॥ ८ ॥
भ्रूमध्ये द्विदले हक्षावित्यन्तर्मातृकां न्यसेत्।
कलापत्राम्बुजे कण्ठे स्वरान् सम्यक् प्रविन्यसेत्॥९॥
ब्रह्मरन्ध्रे तथा वक्त्रे वेष्टने नयनद्वये।
श्रुतिनासापुटद्वन्द्वे गण्डोष्ठद्वयकेषु च॥ १० ॥
दन्तयुग्मे च मूर्द्धास्यद्वयोः षोडश विन्यसेत्।
दोःपत्सन्धिषु साग्रेषु पार्श्वयुग्मे न्यसेत्क्रमात्॥११॥
पृष्ठनाभिद्वये चैव जठरे विन्यसेदथ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः॥१२॥

प्राणजीवौ च परमौ यकारादिषु संस्थिताः।
क्रमेण देवदेवेशि न्यस्तव्या एतदात्मकैः॥ १३॥
हृदि मूलेन संन्यस्य तथैव च गले न्यसेत्।
कक्षद्वयं हृदारभ्य पाणिपादयुगे तथा॥ १४॥
जठराननयोर्व्याप्त्या न्यसेदित्थं तु रूपिणी॥१५॥
अनेन व्याप्तियोगेन मन्त्री वर्णस्वरूपवान्।
ध्यायेद्वर्णस्वरूपाढ्यां स्वरवक्त्रां क्रमेण तु॥ १६॥
कचवर्गकरां रम्यां टतवर्गपदाम्बुजाम्।
पवर्गचारुपार्श्वाङ्गलसत्सातोदरीं पराम्॥ १७॥
यशवर्गाङ्गसुभगां पीनोन्नतघनस्तनीम्॥ १७॥
नितम्बिनीं च गहनां शुक्लार्क्षीं क्षाममध्यमाम्।
मुक्तामाल्यांगरागाङ्गीमक्षस्त्रक्कुम्भशोभिताम्॥१८॥
चिन्तालिखितसत्पाणिं समग्रवरदायिनीम्।
एवं ध्यात्वा ततो देवीं यजनं च सुधीश्चरेत्॥१९॥
आदौ वृत्तं कर्णिकायां हंसानुग्रहसर्गवान्।
वाह्येऽष्टदलमालिख्य केशरेषु स्वरांल्लिखेत्॥२०॥
युग्मयुग्मप्रभेदेन ततो वसुदलं लिखेत्।
कादिवर्गाष्टकं योज्यं ळक्षान्तं परमेश्वरि॥ २०॥
चतुरस्रं ततः कुर्य्यात्सिद्धिदं दिक्षु संलिखेत्।
ठकाराणां चतुष्कं च रेखान्तर्वाह्यतस्ततः॥२२॥

वारुणं च समालिख्य देवीमावाहयेत्सुधीः ।
आदौ पीठार्चनं कृत्वा नवशक्तिपुरस्कृतम् ॥२३॥
मेधा प्रज्ञा प्रभा विद्या धीर्धृतिस्मृतिबुद्धयः ।
विश्वेश्वरी च पूर्वादिदिक्षु मध्ये प्रपूजयेत् ॥ २४ ॥
पश्चादावाह्य गन्धादीनुपचारान्प्रकल्पयेत् ।
अग्नीशासुरवायव्यमध्यदिक्ष्वंगपूजनम् ॥ २५ ॥
नियोज्य स्वरयुग्मान्ते नमस्कारं पृथक् पृथक् ।
तथैव कादिवर्गेषु नमस्कारं पृथक् क्षिपेत् ॥२६॥
अष्टधा वर्गपूजेयं ततो ब्राह्म्यादिभिर्यजेत् ।
लोकपालैस्ततो देवीं समाराध्य यजेत्सुधीः ॥२७॥
लक्षमात्रं दशांशेन हुनेत्पालाशपुष्पकैः ।
त्रिमध्वक्तैर्मिताहारः पुरश्चारी ततो भवेत् ॥ २८ ॥

इति दक्षिणामूर्तिसंहितायां मातृकापूजा-
साधनविधिरष्टमः पटलः ।

---

## अथ नवमः पटलः ।

### ईश्वर उवाच—

पञ्चसिंहासनगता विद्या जप्या महेश्वरी ।
देवता पुरुषास्येन जप्यते तच्छृणु प्रिये ॥ १ ॥

अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा।
प्रणवाद्यं विन्दुनादसहितं कुरु सुव्रते ॥ २ ॥
एतद्वाद्ये बमुच्चार्य्य सकलं कामवीजके।
वामनेत्रेण बिन्द्वन्तं सर्गवान्भृगुरव्ययः ॥ ३ ॥
अनुग्रहेण संयुक्ता विद्येयं त्र्यक्षरी भवेत्।
ऋषिस्तु दक्षिणामूर्त्तिरहं शिरसि विन्यसेत् ॥ ४ ॥
छन्दः पाङ्क्तिस्तु विज्ञेयं मुखे विन्यस्य देवताम्।
हृदये त्रिपुरेशानि वाग्भवं बीजमुच्यते ॥ ५ ॥
शक्तिवीजं शक्तिरेव कामराजं च कीलम्।
एषा विद्या महेशानि पुरुषार्थप्रदायिनी ॥ ६ ॥
पादादिनाभिपर्य्यन्तमाद्यं नाभेस्तथागतम्।
मध्यमं शक्तिवीजं च गलादामस्तकं न्यसेत् ॥७॥
बामपाणितले तद्वद्दक्षपाणौ द्वयं न्यसेत्।
करयोः संपुटे चैवमेवं न्यासद्वयं भवेत् ॥ ८ ॥
एतत्संपुटितां पश्चान्मातृकां विन्यसेत्सुधीः।
नवयोन्यन्तिकं न्यासं कुर्य्यात्कमललोचने ॥ ९ ॥
कर्णयोश्चिबुके देवि शङ्खास्येषु दृशोर्न्नसि।
अंसयोर्हृदये देवि न्यसेत्कूर्परकुक्षिषु ॥ १० ॥
जानुद्वये पदद्वन्द्वगुह्येषु क्रमतो न्यसेत्।
पार्श्वद्वन्द्वहृत्स्तनद्वन्द्वकण्ठे वापि च विन्यसेत् ॥११॥

वीजत्रिकं क्रमेणैव नवधा विन्यसेत् प्रिये ।
वीप्सया तां तु विन्यस्य पञ्च बाणान् न्यसेत्सुधीः ॥१२॥
तथाङ्गं तान्तमालिख्य द्विधा बाह्निसमन्वितम् ।
अनन्तवामनेत्राभ्यां चन्द्रार्घपरिभूषितम् ॥१३॥
कामवीजं च कालादिनादादिपृथिवीयुतम् ।
दीर्घकर्णेन्दुबिन्द्वाढ्यमजपान्तं लिखेत्क्रमात् ॥ १४ ॥
ललाटगलहृन्नाभिमूलाधारेषु विन्यसेत् ।
पुनरेतेषु वीजानि पञ्चसंख्यानि विन्यसेत् ॥ १५ ॥
शक्तित्रयं च वाग्बीजं चतुर्थं वाणमालिखेत् ।
ततः स्त्रीमात्मकं पञ्च कामा एते प्रकीर्त्तिताः ॥१६॥
एवं विन्यस्तदेहः सन् प्राणायामस्य पूर्ववत् ।
ध्यायेद्देवीं महेशानि कदम्बवनमध्यगाम् ॥ १७ ॥
रत्नमण्डपमध्ये तु महत्कल्पलतान्तरे ।
मुक्तातपत्रच्छायायां रत्नसिंहासनस्थिताम् ॥ १८ ॥
अनर्घ्यरत्नघटितमुकुटां रत्नकुण्डलाम् ।
हारग्रैवेयसद्रत्नचित्रितां कङ्कणोज्वलाम् ॥ १९ ॥
पाशाङ्कुशौ महेशानि दक्षवामकरेण वै ।
वरदाभयशोभाढ्यां सम्यक्सारस्वतप्रदाम् ॥ २० ॥
एवं ध्यात्वा जेपन्मन्त्रं रसलक्षं समाहितः ।
पूर्वोक्तेन विधानेन सर्वकामार्थसिद्धये ॥ २१ ॥

अथवा देवदेवेशि नृन(?)वोधं यदा भवेत् ।
तदा सर्वार्थदा विद्या मुक्तिभुक्तिफलप्रदा ॥ २२ ॥
श्रीगुरोः कृपया लभ्या सर्वकामार्थसिद्धये ।
अथवा देवदेवेशि पद्मरागप्रभां स्मरेत् ॥ २३ ॥
रक्तवस्त्रपरीधानां रक्ताभरणमण्डिताम् ।
हकारार्द्धस्वरूपां च बिन्दुत्रययुतां प्रिये ॥ २४ ॥
एवं कामकलाध्यानं सदावां यः(?) समुत्थितम् ।
अथातः सम्प्रवक्ष्यामि ध्यानं सर्वोत्तमोत्तमम् ॥ २५ ॥
तर्पणं च दशांशेन लक्षं चायुतसंख्यया ।
वर्णानुक्रमयोगेन गङ्गातोयेन वा प्रिये ॥ २६ ॥
तर्पणं च त्रिधा भूयः कर्पूरवासितैर्जलैः ।
तद्दशांशं च जुहुयात् किंशुकैस्त्रिमधूत्कटैः ॥ २७ ॥
अथ वक्ष्ये महेशानि यन्त्रं सर्वार्थसिद्धिदम् ।
आदौ शक्तिं समालिख्य तस्यामुपरि संलिखेत् ॥२८॥
तामेव विस्तरात्किञ्चित्संपुटीकृत्य वह्निना ।
संधिभेदक्रमेणैव नवयोनिर्यथा भवेत् ॥ २९ ॥
हंसौकारं लिखेत्पद्मे कामाख्या चाष्टयोनिषु ।
वहिर्वृत्तं समालिख्य दलै राजितमष्टभिः ॥ ३० ॥
केशरेषु स्वरा योज्या द्वंद्वशः परमेश्वरि ।
कचग्रस्तपया वर्णसंस्काराः परमेश्वरि ॥ ३१ ॥

अष्टपत्रेषु संलिख्य ततः शूलाष्टकं लिखेत् ।
पत्राग्रेषु ततो मन्त्री लिखेद्वर्णान् क्रमेण तु ॥ ३२ ॥
तेषु शूलेषु कखगघान्पूर्वतः क्रमतो लिखेत् ।
ङचच्छजानग्निदिग्भागे मञटान् दक्षिणे लिखेत् ॥ ३३ ॥
डढणान् नैऋते भागे थदधान् पश्चिमे लिखेत् ।
नफबान् वायुदिग्भागे भमरानुत्तरे लिखेत् ॥ ३४ ॥
लवशानंसदेशे तु ततो वृत्तं समालिखेत् ।
वृत्तं मातृकया वीजं ततो भूविंवमालिखेत् ॥ ४५ ॥
चतुर्द्वारविशोभाढ्यं मध्ये पुष्पं विनिःक्षिपेत् ।
पीठार्चनं ततः कुर्य्याद्देवीद्रव्यमनोहरा ॥ ३६ ॥
वामा ज्येष्ठा च रौद्री च अम्बिकेच्छा ततः परम् ।
ज्ञानक्रिया कुब्जिका च विश्वदेवीं विषघ्निका ॥ ३७॥
इतरा च तथानन्दा सम्पूज्याश्चादितः प्रिये ।
सिंहासनं च सम्पूज्य मध्ये वीजन्तु मातृका ॥ ३८ ॥
सदाशिवमहाप्रेतपद्मासनपदं लिखेत् ।
ङेऽन्तं नमोऽन्तितं देवि यजेत्सिंहासनं प्रिये ॥ ३९ ॥
सुक्ताच्छत्रशरच्चन्द्रवाह्लिकाकारमाचरेत् ।
उशीरक्षिप्तसच्चन्द्रकलाव्यजनयुग्मकम् ॥ ४० ॥
प्रान्तमुक्तावलीराजत्स्वर्णादर्शं च पीठकम् ।
अलङ्कारमयीं पेटीं करण्डं शशिपूरितम् ॥ ४१ ॥

कर्पूरक्षोदभरितचषकं स्वर्णकङ्कतीम् ।
पुष्पपूर्णकाश्मीरपात्रं च दधतीं क्रमात् ॥ ४२ ॥
ध्यात्वा रामादिकां पश्चाद्देवीमावाहयेत्प्रिये ।
उपचारैः समभ्यर्च्य तर्पणानि निवेदयेत् ॥ ४३ ॥
नवाङ्गं दर्शयेद्देवि देहे मुद्राश्च दर्शयेत् ।
अग्नीशासुरवायव्यमध्यदिक्ष्वंगपूजनम् ॥ ४४ ॥
क्रमेण पुर आरभ्य रतिप्रीतिमनोभवाः ।
त्रिकोणान्तेषु देवेशि तद्बाह्ये बाणदेवताः ॥ ४५ ॥
देवताया दक्षिणे द्वे ऽग्रे वामे एकमग्रतः ।
अनङ्गाऽनङ्गकुसुमा तथा चानङ्गमेखला ॥ ४६ ॥
अनङ्गमदना देवी सुभगा च भगा तथा ।
भगसर्पिण्यथो देवि तथा चानङ्गमालिनी ॥ ४७ ॥
पुर–आरभ्य देवेशि प्रादक्षिण्येन पूजयेत् ।
अष्टकोणेषु तद्बाह्यवसुपत्रेषु चार्चयेत् ॥ ४८ ॥
असिताङ्गं तथा ब्राह्मीं रुरुं माहेश्वरीं तथा ।
चण्डं कौमारिकां चैव क्रोधं तु वैष्णवीं तथा ॥४९॥
उन्मत्तं चैव बाराहीं तथा चैव कपालिनम् ।
माहेन्द्रीं भीषणं देवीं चामुण्डां च ततः परम् ॥५०॥
संहारभैरव देवि महालक्ष्मीं क्रमाद्यजेत् ।
युग्मयुग्मप्रभेदेन स्वैर्देवीं तु भैरवैः ॥ ५१ ॥

कामरूपं तथा देवि मलयं च द्वितीयकम् ।
पठिं कोल्लगिरिं पीठं कुलाचलमतः परम् ॥ ५२ ॥
चौहारं चैव देवोशि जालन्धरमतः परम् ।
उड्यानं देवकोलं च पठिाष्टकामिदंयजेत् ॥ ५३ ॥
बहिर्वृत्ते महेशानि सम्पूज्या भैरवादयः ।
हेतुकं भैरवं त्वाद्यं द्वितीयं त्रिपुरान्तकम् ॥ ५४ ॥
वेतालमग्निजिह्वं च कालान्तकमतः परम् ।
कपालिनं चैकपादं भीमरूपमतः परम् ॥ ५५ ॥
मलयं हाटकं चैव पुर आरभ्य पूजयेत् ।
अध ऊर्द्ध्वं ततो देवि चतुरस्रक्रमेण तु ॥ ५६ ॥
इन्द्रादयस्ततः पूज्यास्ततस्तु वटुकादयः ।
वटुकं योगिनीं क्षेत्रपालङ्गणपतिं यजेत् ॥ ५७ ॥
पूर्वादिदिक्षु कोणेषु बस्वन्य(?)नुक्रमाद्यजेत् ।
रुद्रांश्च सर्वभूतांश्च पुनर्देवीं समर्चयेत् ॥ ५८ ॥
वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ५९ ॥
एवं मन्त्रत्रिबीजान्ते धूप मन्त्र उदाहृतः ।
सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ॥ ६० ॥
सवाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।
तथैव दीपमन्त्रोऽयं शृणु चारार्तिकं प्रिये ॥ ६१ ॥

समस्तचक्रसद्रश्मिमण्डले वर्णरूपिणि ।
आरार्तिकं गृहाणेदं त्रिपुरे मम सिद्धये ॥ ६२ ॥
आरार्तिकमिदं देवि विद्यान्ते मनुरीरितः ।
हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ॥ ६३ ॥
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।
उपहारमनुर्देवि विधेयं च मयेरितः ॥ ६४ ॥
यथाशक्ति जपं कुर्य्यान्नित्यहोमं समर्चयेत् ।
पञ्चाहुतीस्तु मूलेन षडङ्गानि च होमयेत् ॥ ६५ ॥
नित्यहोमप्रकारोऽयं देवि विघ्नानपोहयेत् ।
अथान्यत्संप्रवक्ष्यामि सर्वविघ्ननिवृत्तये ॥ ६६ ॥
अग्निराक्षसवायव्यशिवकोणेषु मन्त्रवित् ।
त्रिकोणवृत्तभूबिम्बमण्डितानि समालिखेत् ॥ ६७ ॥
मण्डलानि च चत्वारि तत्र पात्राणि सांक्षिपेत् ।
बटुकाय नमो बान्ते गान्ते गणपतिं तथा ॥ ६८ ॥
आदौ बिन्दुद्वयं चैव योगिनीभ्यो नमश्चरेत् ।
क्षामन्ते क्षेत्रपालाय नमो मन्त्रचतुष्टयम् ॥ ६९ ॥
एभिर्मन्त्रैरर्घयुक्तैर्मण्डलानि च पूजयेत् ।
एह्येहि देवीपुत्रान्ते बटुकान्ते च नाथ च ॥ ७० ॥
कपिलान्ते जटाभारभासुरन्ते त्रिनेत्र च ।
ज्वालामुखं ततः सर्वविघ्नान्नाशय नाशय ॥ ७१ ॥

सर्वोपचारसहितं वलिं गृह्णपदद्वयम् ।
वह्निजायान्वितो मन्त्रो बटुकस्य उदाहृतः ॥ ७२ ॥
ऊर्द्ध्वे ब्रह्माण्डतो बान्ते दिव्यान्ते गगनेति च ।
तले भूपदमालिख्य तले चैव तु निष्कले ॥७३॥
वा पाताले तले चान्ते सलिलादौ च वा लिखेत् ।
पवनान्ते तयोर्यत्र कुत्रान्ते च स्थिता इति ॥ ७४ ॥
वा क्षेत्रे चैव पीठोपपीठादिषु समालिखेत् ।
ततः कृतपदो धूपदीपादि च पदं लिखेत् ॥ ७५ ॥
केन प्रीताश्च देवाश्च सदा नः शुभ संलिखेत् ।
बल्यन्ते विहिताश्चैव पर्णे देवेन्द्र संलिखेत् ॥७६॥
वन्द्याश्च यां समालिख्य योगिनीभ्यो ऽग्निवल्लभा ।
सर्वान्ते योगिनीनां च कवचास्त्राग्निवल्लभा ॥७७॥
योगिनीनामयं मन्त्रः क्षेत्रपालमनुं शृणु ।
षड्दीर्घस्वरभेदेन क्षकारं भेदयेत्प्रिये ॥ ७८ ॥
कवचं स्थानशब्दान्ते क्षेत्रपालं समालिखेत् ।
धूपदीपादिसहितं वलिं गृह्ण द्विधा लिखेत् ॥ ७९ ॥
सर्वकामं पूरयाग्निवल्लभा क्षेत्रजो मनुः ।
गांगींगूंगं समालिख्य गणपान्ते तथा लिखेत् ॥८०॥
वरशब्दं द्विधा दान्ते ततः सर्वजनं पदम् ।
मे वशश्चानय प्रान्ते ततः सर्वोपचारतः ॥८१॥

सहितं च बलिं गृह्ण गृह्ण स्वाहा मनुः प्रिये ।
गणेशस्य वरारोहे मन्त्रैरपि बलिं हरेत् ॥ ८२ ॥
बटुकस्य च तर्जन्या सहाङ्गुष्ठेन वा प्रिये ।
वामाङ्गुष्ठानामिकाभ्यां क्षेत्रपालस्य कथ्यते ॥ ८३ ॥
तर्जनीमध्यमानामा योन्याकारेण योजयेत् ।
बलिदानविधौ मन्त्री मुद्राः संदर्शयेत्क्रमात् ॥ ८४ ॥
स्तुत्वा नत्वा पुनर्देवीं देवीमात्मनि योजयेत् ।
आत्मविद्याशिवैस्तत्त्वैर्गुरुं सन्तोष्य देवताम् ॥ ८५ ॥
आनन्दसहितो मन्त्री सर्वकामानि साधयेत् ॥

इति दक्षिणामूर्तिसंहितायां त्रिपुरेश्वरीसमाराधन-
विधिर्नवमः पटलः ।

---

## अथ दशमः पटलः ।

ईश्वर उवाच—

महासिंहासनगता विधेयं त्रिपुरेश्वरी ।
शिवचन्द्राग्निदीर्घाक्षिबिन्दुनादात्मकं ततः ॥ १ ॥
चन्द्रेण वह्निवामाक्षिबिन्दुनादमयं प्रिये ।
शक्तिं कलाढ्यमन्त्रे च तुर्य्यबीजमुदाहृतम् ॥ २ ॥

श्रीबीजं कुरु तातीर्यं विद्या वेदाक्षरा भवेत् ।
उन्मनी नाम विद्येयं पूर्वाम्नायाभिदेवता ॥ ३ ॥
अनया विद्यया देवि देवी सम्मानिता प्रिये ।
शक्तिं कलाढ्यमन्त्रे च तुर्यबीजमुदाहृतम् ॥ ४ ॥
पूर्वसिंहासनगता भोगमोक्षफलप्रदा ।
मयैषा पूर्वषट्कोणे जप्यते ऽन्यापि सुव्रते ॥५॥

इति दक्षिणामूर्तिसंहितयां पूर्वसिंहासनविवरणं
दशमः पटलः ।

## अथ एकादशः पटलः ।

ईश्वर उवाच—

दक्षिणास्येन देवेशि ललिता त्रिपुरा परा ।
कामेश्वरी रक्तनेत्रा माया ऽद्या ऽपि प्रजापतेः ॥ १ ॥
शक्तिबीजं वाग्भवं तु कामराजं तु पूर्ववत् ।
अन्त्यं शिवसमायुक्तं त्रिपुरेश्याः पुरेश्वरी ॥२॥
इयं तु ललिता देवी महासौभाग्यवर्द्धिनी ।
न्यासपूजादिकं सर्वं त्रिपुरेशीव नान्यथा ॥ ३ ॥
ध्यानमस्याः प्रवक्ष्यामि साधकानां स्वसिद्धये ।
उद्यत्सूर्य्यसहस्राभां माणिक्यमुकुटोज्ज्वलाम् ॥४॥

रक्तकुण्डलमुक्तालिपादकां गणभूषिताम् ।
रत्नमञ्जीरसुभगां रक्तवस्त्रानुलेपनाम् ॥ ५ ॥
पाशांकुशौ पुस्तकं च दधतीमक्षमालिकाम् ।
सर्वाङ्गसुन्दरीं ध्यायेत्सर्वसम्पत्तिहेतवे ॥ ६ ॥

इति दक्षिणामूर्तिसंहितायां ललिताविधिर्नाम एकादशः पटलः ।

## अथ द्वादशः पटलः ।

ईश्वर उवाच—

केवलं कामबीजं तु कामेशामनुरुच्यते ।
कामेश्वरी देवता स्यात्कन्दर्पे बीजशक्तिके ॥ १ ॥
पृथिवी कीलकं प्रोक्तं महावश्यकरा परा ।
षड्दीर्घस्वरभेदेन षडङ्गानि प्रविन्यसेत् ॥ २ ॥
पूर्वोक्तपञ्चबाणं च पूर्ववद्विन्यसेत्प्रिये ।
जपाकुसुमसङ्काशां धनुर्बाणधरां स्मरेत् ।
नानालङ्कारसुभगां मोहयन्तीं जगत्त्रयम् ।
अर्कलक्षञ्जपेन्मन्त्रं बन्धूककुसुमं हुनेत् ॥ ४ ॥
तद्दशांशेन देवेशि पुरश्चारी ततो भवेत् ।
अथ यन्त्रं प्रवक्ष्यामि त्रैलोक्याकर्षणे क्षमम् ॥५॥
त्रिकोणं चाष्टपत्रं च ततो भूबिम्बमालिखेत् ।

मध्ये विदर्भितं बीजं साध्यसाधकलाञ्छितम् ॥६॥
कोणप्रयाणां विद्यां च पृथग्वसुदलेषु च ।
दलाग्रकेषु संलिख्य चतुरस्रेष्वधो लिखेत् ॥ ७ ॥
त्रैलोक्यमोहनं यन्त्रं त्रिषु लोकेषु दुर्लभम् ।
मध्ये पुष्पं विनिःक्षिप्य ततो यागार्चनं चरेत् ॥८॥
मोहिनी क्षोभिणी चैव वशिनी स्तम्भिनी तथा ।
आकर्षिणी द्राविणी च तथैवाह्लादिनी क्रमात् ॥९॥
क्लिन्नवज्राऽदिना चैव दिक्षु मध्ये प्रपूजयेत् ।
ततः सिंहासनं जप्त्वा देवीमावाहयेत्प्रिये ॥१०॥
उपचारैः समाराध्य गुप्तमुद्रां प्रदर्शयेत् ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ ११ ॥
त्रिपुरेशी च वर्गानामर्चनं परमेश्वरी ।
अनङ्गरूपिण्यानङ्गमदनाऽनङ्गमन्मथा ॥ १२ ॥
अनङ्गकुसुमा तावदनङ्गमदनातुरा ।
अनङ्गरूपिका मध्ये त्वनङ्गकुसुमा प्रिये ॥ १३ ॥
अनङ्गशिशिरा चैव तथा चानङ्गमेखला ।
अनङ्गदीपिकामष्टदलेषु क्रमतो यजेत् ॥ १४ ॥
इन्द्रादयश्च सम्पूज्या पुनराराधयोच्छिवाम् ।

इति दक्षिणामूर्तिसंहितायां कामेश्वरीपूजाविधि-
द्वादशः पटलः ॥ १५ ॥

## अथ त्रयोदशः पटलः।

ईश्वर उवाच—

रक्तनेत्रां प्रवक्ष्मामि सर्वकामफलप्रदाम्।
त्रिपुरेशीं समालिख्य वाग्भवं शशिमण्डितम् ॥१॥
वीजाग्निमण्डितं कामवीजं चान्त्यक्रमान्न्यसेत्।
रक्तनेत्रा महाविद्या त्रिपुरा परमेश्वरी ॥ २ ॥
ललितावदिमां ध्यायेल्ललितात्मकुमारिकाम्।
इयं तु यौवनप्रौढा पीनोन्नतघनस्तनी ॥ ३ ॥
नितम्बिनी क्षाममध्या शान्तवक्त्रसुलोचना।
पूजान्यासादिकं सर्वं त्रिपुरेशीव सुन्दरी ॥ ४ ॥

इति दक्षिणामूर्त्तिसंहितायां रक्तनेत्रापूजनविधिः त्रयोदशः पटलः ॥ १३ ॥

## अथ चतुर्दशः पटलः।

ईश्वर उवाच—

अथ वक्ष्ये महादेवि दक्षिणाम्नायदैवताम्।
एतन्मध्यगतं क्लिन्ने कामवीजं ततो लिखेत् ॥१॥
मदद्रवे कुले चोक्त्वा त्रिपुरेशानीति प्रिये।
वह्निमदद्रवेणेयं दक्षिणाम्नायदेवता ॥ २ ॥

भोगिनी नाम विद्येयं त्रिषु लोकेषु विश्रुता ।
अनया विद्यया देवि त्रयं [1]सम्मानितं सदा ॥३॥

इति दक्षिणामूर्तिसंहितायां दक्षिणाम्नायदेवता-
निरूपणं नाम चतुर्दशः पटलः ॥ १४ ॥

## अथ पञ्चदशः पटलः

### ईश्वर उवाच—

देवि पश्चिमवक्त्रेण मयाऽद्यापि[2] प्रजप्यते ।
विद्याचतुष्टयं साक्षादमृतानन्दविग्रहम् ॥ १ ॥
महासिंहासनगतां तत्र सञ्जीवनीं शृणु ।
शक्तिबीजं समुच्चार्य शिवचन्द्रौ समालिखेत् ॥२॥
अनुस्वारत्रिसर्गाभ्यां यन्त्रितौ क्रमतः प्रिये ।
सञ्जीवनि च जूंजीवं प्राणग्रन्थिस्थमालिखेत् ॥३॥
कुरु[3]शब्दोत्तरं सः स्यात् वह्निजायान्वितो मनुः ।
त्रिशिरास्तु ऋषिः शुक्रो गायत्रं छन्द उच्यते ॥४॥

---

(१) 'त्रयो देवाः सुमानिताः' इति पाठान्तरम् ।

ललिता त्रिपुरा कामेश्वरीरक्तनेत्राख्यं पूर्वोक्तं अनया संमानितं पूजितं स्यात् । तेन तदन्यतमध्यानेन पूजादिकमस्या इत्याशयः ।

(२) 'मया विद्या प्रजप्यते' इति पाठान्तरम् ।

(३) 'कुरुशब्द भृगुः सर्गो' इति पाठान्तरम् ।

सञ्जीवनी देवता स्याच्छक्तिरन्त्यादिवीजकम् ।
चतुर्थन्त्रितये पञ्चपञ्चकं चतुरेव हि ॥ ५ ॥
त्रिकं च क्रमतो देवि षडङ्गानि प्रविन्यसेत् ।
भूर्जे क्षीरेण विलिखेत् षड्दलेन तु तं सुधीः ॥ ६ ॥
कर्पूराभां स्फुरन्मुक्ताभूषणैर्भूषितां पराम् ।
ज्ञानमुद्रामक्षमालां दधतीं चिन्तयेत्पराम् ॥ ७ ॥
परं ध्यात्वा वायुमध्ये पूजयेदुपचारकैः ।
आदावङ्गानि सम्पूज्य षट्कोणेषु च पूजयेत् ॥८॥
सञ्जीवनीं तथा वृद्धिपूर्वां सञ्जीवनीं ततः ।
अहङ्कारमयीं तद्वत्सत्त्वसञ्जीवनीं प्रिये ॥ ९ ॥
रजःसञ्जीवनीं चैव तमःसञ्जीवनीं क्रमात् ।
शक्तिवीजेन देवेशि नमोऽन्तेन प्रपूजयेत् ॥१०॥
वर्णलक्षं जपेन्मन्त्रं पुरश्चरणहेतवे ।
तद्दशांशेन जुहुयाद् दूर्वास्त्रिमधुसंयुताः ॥ ११ ॥
इति साधारणी पूजा विशेषं शृणु पार्वति
ईति पूजां पुरा कृत्वा पश्चादावरणं शृणु ॥ १२ ॥
प्राणापानौ तथा व्यान उदानश्च समानकः ।
अग्रकोणे ततं चैव विततं च तथा घनम् ॥ १३ ॥

---

(१) 'एवं' इति पाठान्तरम् ।

सुचिरं चेश्वरीशब्दे द्वितीये कोणके यजेत् ।
पृथिव्यप्तेज आख्यातं वाय्वाकाशौ तृतीयके ॥ १४ ॥
शब्दस्पर्शौ च रूपं च रसगन्धौ चतुर्थके ।
इच्छाज्ञाने क्रिया चैव परा माया च पञ्चमे ॥ १५ ॥
भूर्भुवः स्वस्तपः सत्यं षष्ठकोणे क्रमाद्यजेत् ।
सर्वस्यान्ते वदेद्देवि[1] द्विठः सञ्जीवनीपदम् ॥ १६ ॥
क्रियासञ्जीवनीपूजा मृत्युं जयति निश्चयात् ।

इति दक्षिणामूर्तिसंहितायां सञ्जीवनीकथनं
नाम पञ्चदशः पटलः ॥ १५ ॥

## अथ षोडशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि मृत्युञ्जयपरात्परम् ।
वदद्वन्द्वं वादिनीति वाङ्मध्ये निक्षिपेत्प्रिये ॥ १ ॥
हस्त्राढ्यं वाग्भवं देवि क्लिन्ने क्लेदिनि चालिखेत् ।
महाक्षोभं कुरु द्वन्द्वं शिवस्त्वं[2] च कलानलान् ॥ २ ॥
वामाक्षिविन्दुनादाक्तां तारवीजं ततो वदेत् ।
मोक्षं कुरु युगं हंसः शक्रस्वरविसर्गवान् ॥ ३ ॥

(१) 'पठेद्देवि' इति पाठान्तरम् ।
(२) शिवो हकारः त्वं इत्यनेन शक्तिः सकार इत्यर्थः ।

इयं सञ्जीवनी देवी ऋषिर्[१]रस्यासितः प्रिये ।
गायत्रं छन्द आख्यातं देवतेयं तु भैरवी ॥ ४ ॥
आदिकूटं भवेद्बीजं मध्यकूटं तु कीलकम् ।
अन्त्यकूटं भवेच्छक्तिः साक्षान्मृत्युविनाशिनी ॥ ५ ॥
नवशक्रस्त्वष्टवर्णान् न्यसेद्धै हृच्छिरःशिखा ।
क्रमेणानेन चोच्चार्य्य पुनर्वारत्रयं लिखेत् ॥ ६ ॥
अथ त्रिकोणमालिख्य ततः षट्कोणमालिखेत् ।
वसुपत्रे कामबीजं षट्कोणे जालपीठकम् ॥ ७ ॥
उड्डीयाणं त्रिकोणे तु विद्याभागत्रयेण तु ।
ध्यात्वा चावाहयेद्देवीं कदम्बवनमध्यगाम् ॥ ८ ॥
पुस्तकं वामहस्तेन दक्षिणे चाक्षमालिकाम् ।
बिभ्रतीं[२] कुन्दधवलां कुमारीं चिन्तयेत्पराम् ॥ ९ ॥
सर्वोपचारैः सम्पूज्य षडङ्गावरणान्यजेत् ।
वसन्तं मनजं चन्द्रं विद्याभागत्रयेण तु ॥ १० ॥
त्रिकोणं पूजयेन्मन्त्री प्रादक्षिण्येन चाग्रतः ।
ब्रह्मविष्ण्वीशब्दान्ते यजेत्संजीवनीं तु ताम् ॥ ११ ॥
इति संजीवनीषट्कं त्रिकोणे च प्रपूजयेत् ।
[३]धर्मार्थकाममोक्षान्ते जयन्तीविजयान्तिके ॥ १२ ॥

---

(१) 'ऋषिः स्याद सितः प्रिये' इति पाठान्तरम् ।

(२) दधतीं' इति पाठान्तरम् ।

(३) द्वादशश्लोकोत्तरार्द्धं त्रयोदशश्लोकपूर्वार्द्धं च 'ख' पु० नास्ति ।

सञ्जीवनीपदं ब्रूयात् षट्कोणेषु च पूजयेत् ।
अष्टकान्ते तु मातॄणां कुर्य्यात्संजीवनीपदम् ॥ १३ ॥
अनेन विधिना विद्वान् पूजयेच्चतुरस्रके ।
तारबीजं शक्तिबीजं श्रीबीजं चादिमं कुरु ॥ १४ ॥
इति जप्त्वा महेशानि पुरुषार्थप्रदा भवेत् ।
पुनश्चाराधयेद्देवीं गन्धपुष्पादिभिः प्रिये ॥ १५ ॥
पुरश्चरणचारीति पूर्वसञ्जीवनीव हि ।

इति दक्षिणामूर्तिसंहितायां सञ्जीवनीयजनविधिः
षोडशः पटलः ॥ १६ ॥

## अथ सप्तदशः पटलः ।

ईश्वर उवाच—

परा क्लिन्नेवाग्भवं च करोमात्मकमक्षरम् ।
ततो नित्यमदप्रान्ते द्रवेमायां च संलिखेत् ॥ १ ॥
वज्रेशी रविवर्णेयं ऋषिर्ब्रह्मा च तन्मनोः ।
छन्दो विराट् च वज्रेशी देवता परिकीर्त्तिता ॥ २ ॥

पञ्चमं च चतुर्थं च बीजशक्तिक्रमेण तु।
तार्त्तीयं कीलकं देवि षडङ्गानि प्रविन्यसेत् ॥ ३ ॥
वृत्तं कृत्वा मनोरम्यं कर्णिका च सुशोभितम्।
कामबीजेन तन्मध्ये महासिंहासनं यजेत् ॥ ४ ॥
रविपत्रं विशोभाढयं यन्त्रं विद्यां समालिखेत्।
चतुरस्रं ततः कृत्वा मध्ये पुष्पं विनिाक्षिपेत् ॥ ५ ॥
ध्यात्वा चावाहयेद्देवीं कन्दम्बवनमध्यगाम्।
रक्तवस्त्रकलाचारुमुकुटाम्बरभूषणाम् ॥ ६ ॥
महातारुण्यगर्वाढ्यां लोचनत्रयभूषिताम्।
शोणिताब्धितरत्पोतमहायन्त्रोपरिस्थिताम् ॥ ७ ॥
डाकिनीं सायकांश्चैव पाशं चैव स्रजं तथा।
चापं कपालं दधतीं शोणमाल्यानुलेपनाम् ॥ ८ ॥
सर्वरक्तमयीं देवीमुपचारैः समर्चयेत्।
आदाबङ्गानि सम्पूज्य रविपत्रे प्रपूजयेत् ॥ ९ ॥
कृत्वेत्थं क्लेदिनीं नन्दां क्षोभिणीं मदनातुराम्।
निरञ्जनां वाग्भवतीं च क्लिन्नां च मदनावतीम्॥ १० ॥
खेचरीं द्राविणीं चैव क्रमाद् वेदवतीं यजेत्।
कामबीजेन सम्पूज्या भूविम्बे लोकपालकाः ॥ ११ ॥
तथा च सम्प्रवक्ष्यामि सम्प्रदायान्तरं शृणु।
रव्यंशुभूमिविम्बं हि चाष्टपत्रं समालिखेत् ॥ १२ ॥

मातरस्तत्र सम्पूज्या भूविम्बे लोकपालकाः ।
पुनर्देवीं समभ्यर्च्य वर्णलक्षं जपेत्सुधीः ॥ १३ ॥
तद्दशांशेन जुहुयादम्बुजै रक्तसन्निभैः ।

इति दक्षिणामूर्तिसंहितायां चक्रप्रस्ताविनीपूजा-
विधिर्नाम सप्तदशः पटलः ॥ १७ ॥

## अथाष्टादशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि भैरवीं त्रिपुरां पराम् ।
हसाद्यं वाग्भवं चाद्यं शिवचन्द्रकला परा ॥१॥
त्रिपुरेशीशक्तिबीजं शिवाद्यं कुरु सुव्रते ।
पञ्चमुण्डसमासीनां मुण्डमालाविभूषिताम् ॥ २ ॥
आताम्रार्कप्रभाभासां रक्तभूषणभूषिताम् ।
पाशाङ्कुशाभयवरां साक्षाद्भुवनमातृकाम् ॥ ३ ॥
सर्वमस्या विधानं तु त्रिपुरेशीव विद्धि हि ।
अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा ॥ ४ ॥

इति दक्षिणामूर्तिसंहितायां त्रिपुरेशीभैरवीविद्या
विधिरष्टादशः पटलः ॥ १८ ॥

## अथैकोनविंशः पटलः ।

ईश्वर उवाच—

एतच्चतुष्टयं देवि पश्चिमाम्नायसागरे ।
वाग्भवं शक्तिवीजं च श्रीवीजं हसफानलम् ॥ १ ॥
रुद्रस्वरेण सम्भेद्य[1] बिन्दुनान्दाङ्कितौ हसौ ।
एतत्सम्पुटितां विद्यां द्वात्रिंशां तु समालिखेत् ॥२॥
नभो भगवति प्रान्ते चतुर्थं प्रणवं लिखेत् ।
ईश्वराख्यं[2] क्रमेणैव कुब्जिकायै पदं ततः ॥ ३ ॥
क्षामन्ते तु परां पश्चाद् हुमात्मकमतः परम् ।
अघोरे द्वितयं पश्चादघोरमुखि संलिखेत् ॥ ४ ॥
छिं छिं किणियुगं विच्चे कुब्जिका शाम्भवी परा ।
पश्चिमाम्नायदेवेशी भोगमोक्षप्रदायिनी ॥ ५ ॥
महासिंहासनाख्यं तु कथितं तच्चतुष्टयम् ।
अनया विद्यया गौरी सम्यक् संमानिता सदा ॥ ६ ॥
इत्येष पश्चिमाम्नायमहासिंहासनेश्वरी ।

इति दक्षिणामूर्तिसंहितायां पश्चिमाम्नायमहासिंहासन-
विद्याविधिर्नामैकोनविंशः पटलः ॥ १९ ॥

---

(१) 'संयोज्य' इति पाठान्तरम् ।
(२) 'हस्फ्रें' अस्यैव ईश्वराख्यसंज्ञा ।

## अथ विंशः पटलः।

ईश्वर उवाच—

उत्तरास्येन देवेशि मया विद्या प्रजप्यते।
महासिंहासनगता भैरवी डामरेश्वरी ॥ १ ॥
उत्तरादीति विद्येशी भोगमोक्षफलप्रदा।
पूर्वोक्तभैरवीदेव्याः कामकूटे शिवं हरेत् ॥ २ ॥
परायुक्तं मध्यकूटं महासिंहासनेश्वरी।
बन्धूककुसुमाभासां पञ्चमुण्डाधिवासिनीम् ॥ ३ ॥
स्फुरच्चन्द्रकलारत्नमुकुटां मुण्डमालिनीम्।
त्रिनेत्रां रक्तनयनां पीनोन्नतघनस्तनीम् ॥ ४ ॥
पुस्तकञ्चाक्षमालां च वरदं चाभयं क्रमात्।
दधतीं संस्मरेन्नित्यं उत्तराम्नायमानिताम् ॥ ५ ॥
मदनान्तकरेफात्ममहाचण्डसमुल्लिखेत्।
योगेश्वरि नवार्णा तु विद्येयं कालिका मता ॥ ६ ॥
नवाक्षरीं महेशानि स्मरेदुत्तरनायिकाम्।
अनया विद्यया देवि सम्यक् सम्मानितो भवेत् ॥७॥
न्यासपूजादिकं सर्वं त्रिपुरेशीव सुन्दरि।
महासम्पत्प्रदा देवी महाभयाविनाशिनी ॥ ८ ॥

इति दक्षिणामूर्तिसंहितायां महासिंहासनेश्वरीनाम
भैवरवीविधिर्विंशतितमः पटलः ॥ २० ॥

---

(१) 'विद्धि हि' इति पाठान्तरम्।

## अथैकविंशः पटलः ।

ईश्वर उवाच—

चतुःसिंहासनैश्वाद्या भैरवी परमेश्वरी।
वाग्भवं सर्वसाम्राज्यदायिन्या मध्यमं लिखेत् ॥ १॥
दक्षिणाम्नायरुद्राणसर्वान्त्यं च समालिखेत् ।
चैतन्यभैरवीं ध्यायेत्पाशाङ्कुशकपालिनीम् ॥ २ ॥
रक्तां मुण्डस्रजं पञ्चप्रेतसिंहासनस्थिताम् ।
कामेश्वरीं च सम्पूज्य पूर्वसिंहासनाश्रयाम् ॥ ३ ॥

इति दक्षिणामूर्तिसंहितायां चैतन्यभैरवीविद्याविधि-
र्नाम एकविंशतितमः पटलः ॥ २१ ॥

## अथ द्वाविंशः पटलः ।

ईश्वर उवाच—

डरक्ष्मा[1] मादनं जीवं शिवं चैव त्रिधा लिखेत् ।
अर्कतुर्येन्द्र[2]कूटानि[3] क्रमात्तन्मण्डितं कुरु ॥ १ ॥

---

(१) डकारः, रेफः, क्ष्मा = लकारः, मादनं = ककारः, जीवः = सकारः, शिवो = हकारः ।

(२) अर्को द्वादशः = ऐं, तुर्यश्चतुर्थः = ईं, इन्द्रश्चतुर्दशः = औः, एतैः स्वरैः क्रमेण संयुक्ताः पूर्वोक्ता वर्णा एव प्रकृतविद्यामनुः ।

(३) 'कलया' इति पाठान्तरम् ।

बिन्दुनादात्मकं चाद्यं युग्ममन्त्यं विसर्गवान् ।
ध्यानं त्रिभुवनेश्वर्य्या भैरव्या एव सुन्दरि ॥ २ ॥
ऋष्यादि त्रिपुरेशीव पूजा चा[1]ऽत्र निगद्यते ।
त्रिकोणे क्रमतो देवि रतिशान्तिमनोभवाः ॥ ३ ॥
डाकिनीं शाकिनीं चैव राकिनीं लाकिनीं तथा ।
काकिनीं हाकिनीं चैव षट्कोणेषु यजेत्क्रमात् ॥४॥
अष्टपत्रेषु देवेशि तथाऽनङ्गादिपूजनम् ।
मातरो भैरवैः सार्द्धं तथा पीठादिभैरवाः ॥ ५ ॥
इन्द्रादयश्च सम्पूज्या दक्षिणाम्नायमानिताः ।

इति दक्षिणामूर्त्तिसंहितायां षट्कूटा[2]भैरवीविधि-
र्नाम द्वाविंशः पटलः ॥ २२ ॥

## अथ त्रयोविंशः पटलः ।

षट्कूटाभैरवीवर्णान् संहारक्रम[3]तो लिखेत् ।
तथा संयोज्य नित्येयं भैरवी भयहारिणी ॥ १ ॥

---

(१) 'चाऽपि' इति पाठान्तरम् ।

(२) षड्भिरक्षरैः कूटमस्या इति षट्कूटेत्यर्थः । तथा च त्रीण्ये-वाऽत्र कूटानि, न तु षट्संख्याकानि कूटान्यस्यामिति शङ्कनीयम् ।

(३) पूर्वोक्तषट्कूटाभैरवीमन्त्रवर्णा एव संहारक्रमेण विन्य-

षट्कूटाभैरवीवच्च विधानं पूजनादिकम् ।
पश्चिमाम्नायसामर्थ्यगर्वितेयं सुरेश्वरी ॥ २ ॥
अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा ।

इति दक्षिणामूर्तिसंहितायां नित्याभैरवीविधि-
र्नाम त्रयोविंशः पटलः ॥ २३ ॥

## अथ चतुर्विंश पटलः ।

ईश्वर उवाच—

डामरेश्वरभैरव्या कादिं हित्वा सुरेश्वरि ।
बिन्दुनादकलाक्रान्तशक्तिबीजं समुच्चरेत् ॥ १ ॥
भयविध्वंसिनी नाम भैरवी परिकीर्त्तिता ।
उत्तराम्नायगम्भीरां डामरेशीं च पूजयेत् ॥ २ ॥
सहखान्तफरेफात्मबीजं संलिख्य मन्त्रवित् ।
भयविध्वंसिनी नाम भैरव्या द्वयमालिखेत् ॥ ३ ॥
मध्यमं चान्तिमं चैव विद्येयं भोगमोक्षदा ।
अघोरभैरवी देवी श्यामा मुण्डस्रजाकुला ॥ ४ ॥

---

स्ताश्चेत् नित्याभैरवीविद्या भवति । षट्कूटाभैरव्यां डरलकसहेति वर्ण क्रमः अस्यां तु हसकलरडेति क्रम इत्यर्थः । एवं च मन्त्रमर्णेष्वेव संहारक्रमः, न तु कूटान्तिमस्वरयोजनेऽपीति बोध्यम् ।

दक्षिणोत्तरया प्रौढा पञ्चमुण्डाधिवासिनी ।
पुस्तकं चाक्षमालां च पाशञ्चैवाङ्कुशन्तथा ॥ ५ ॥
खट्वाङ्गं डमरुं चैव कपालं शूलमेव च ।
दधतीं परमेशानि षट्कूटामिव पूजयेत् ॥ ६ ॥

इति दक्षिणामूर्तिसंहितायां भयविध्वंसिनीअघोर-
भैरवीविधिश्चतुर्विंशः पटलः ॥ २४ ॥

## अथ पञ्चविंशः पटलः ।

### ईश्वर उवाच—

चतुः सिंहासनसमां श्रीसम्पत्भैरवीं यजेत् ।
भयविध्वंसिनी नाम भैरवी पूर्वमालिखेत् ॥ १ ॥
आद्ये तृतीये देवेशि वह्निबीजसमासना ।
इयं सम्पत्प्रदा नाम त्रिषु लोकेषु दुर्लभा ॥ २ ॥
चतुःषष्टिमहाकोटियोगिनीशासनक्षमा ।
आताम्रार्कसहस्राभा त्रिनेत्रा चन्द्रसन्मुखी ॥ ३ ॥
चन्द्रखण्डस्फुरद्रत्नमुकुटा क्षाममध्यमा ।
नितम्बिनी स्फुरद्रत्नरशना चन्द्रभूषणा ॥ ४ ॥
उन्मत्तयौवनप्रौढा पीनोन्नतघनस्तनी ।
अमृतङ्कामममुण्डस्रङ्मण्डिताङ्गीं सुशोभनाम् ॥ ५ ॥

पुस्तकं चाभयं वामे दक्षिणे त्वक्षमालिकाम् ।
वरं च दधती पूज्या त्रिपुरेशीव नान्यथा ॥ ६ ॥

इति दक्षिणामूर्तिसंहितायां सम्यत्प्रदाभैरवीविद्याविधिः पञ्चविंशः पटलः ॥ २५ ॥

## अथ षड्विंशः पटलः ।

ईश्वर उवाच—

अथासावेकवक्त्रेण मयाद्यापि प्रजप्यते ।
विद्यानां पञ्चकं देवि त्रिषु लोकेषु दुर्लभम् ॥ १ ॥
वाग्भवं शिवसंयुक्तं वाग्भवे मध्यमे शृणु ।
हकलान्ते महेशानि शिववीजत्रयं लिखेत् ॥ २ ॥
रेफवामाक्षिबिन्द्विन्दुघटितं तु तृतीयकम् ।
हसानुग्रहसर्गाढ्यं विद्यैषा सुन्दरी प्रिये ॥ ३ ॥
अहसान्यो जपेन्मन्त्री रवितुर्य्यमनुस्वरैः ।
आद्यं सैंसकुमायोन्धिबिन्दुनादकलात्मिके ॥ ४ ॥
द्वयं द्वितीया देवेशि सुन्दरी परिकीर्तिता ।
केवलं वाग्भवं देवि वाग्भवे मध्यमे शृणु ॥ ५ ॥

---

( १ ) आद्यं वाग्भवस्थानीयम् । सैंसकुलकाराढ्यं मायाढ्यं, इन्धिका = उकारस्तद्युक्तं तृतीयं विन्दुनादकलात्मकं द्वयमिति ।

हसएहसहस्रांश्च वाग्भवेन च योजयेत् ।
हत्रयं कलहल्लेखाः सन्ति कूटेश्वरि प्रिये ॥ ६ ॥
चतुष्कं शिवबीजानां रेफानुग्रहसेन्दुमत् ।
इयं तृतीया देवेशि सुन्दरी चतुरक्षरी ॥ ७ ॥
कलान्ते शिवयुग्मं तु तथा बीजत्रयं शिवम् ।
परया पिण्डितं कुर्य्यात्कूटमेतत्त्रिधा प्रिये[1] ॥ ८ ॥
वाग्भवे कामराजे च शक्तिबीजे च संलिखेत् ।
चतुर्थी सुन्दरी ख्याता भोगमोक्षप्रदा[2]यिनी ॥ ९ ॥
जीवः शिवयुगं जीवः क्ष्माक्षकारशिवेन्दुमा[3]न् ।
एतदाद्यं च मध्यं च हंसयुक् क्ष्मार्क्ष[4]हेतुमत ॥ १० ॥
अन्त्यं तु हसलक्षेन्दुहेत्वाको[5]शविभूषितम् ।
त्रिपुरेशीमनोरेषा पञ्चमी सुन्दरी भवेत् ॥ ११ ॥
सम्पत्प्रदाभैरवीवत् ध्यायेत्साधकसत्तमः ।
ऋष्यादिपूजा विज्ञेया त्रिपुरेशीव नाऽन्यथा ॥ १२ ॥

इति दक्षिणामूर्तिसंहितायां पञ्चसुन्दरीविवरणं नाम
षड्विंशः पटलः ॥ २६ ॥

---

( १ ) 'लिखेत्' इति पाठान्तरम् ।
( २ ) 'फलप्रदा' इति पाठान्तरम् ।
( ३ ) 'युक्' इति पाठान्तरम् ।
( ४ ) 'हंसौदमाद्येन्दुमन्मथः' इति पाठान्तरम् ।
( ५ ) हसाकाशस्तथान्तिमम्' इति पाठान्तरम् ।

## अथ सप्तविंशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि विद्यां कल्पलतां प्रिये ।
यासां विज्ञानमात्रेण पलायन्ते महापदः ॥ १ ॥
श्रीविद्या पारिजातेशी षञ्चकामेश्वरी तथा ।
पञ्चवाणेश्वरी देवी कुमारी पञ्च कीर्तिताः ॥ २ ॥
सम्पत्प्रदाया भैरव्या वाग्भवं वीजमालिखेत् ।
तारेण परया देवि सम्पुटीकृत्य मन्त्रवित् ॥ ३ ॥
सरस्वत्यै हृदन्तोयं रुद्रान्तमनुरीरितिः ।
दक्षिणामूर्त्तिसञ्ज्ञप्यो गायत्रं छन्द उच्यते ॥ ४ ॥
पारिजातेश्वरी राज्ञी देवता परिकीर्तिता ।
तृतीयं च द्वितीयं च बीजशक्तिश्च तारकः ॥ ५ ॥
कीलकं परमेशानि महासारस्वतप्रदा ।
षड्दीर्घस्वरसम्भिन्नबीजेनाङ्गानि विन्यसेत् ॥ ६ ॥
ब्रह्मरन्ध्रे भ्रुवोर्मध्ये नेत्रश्रोत्रपुटे कुरु ।
नासारन्ध्रमयं जिह्वालिङ्गजानूरु बिन्यसेत् ॥ ७ ॥
वर्णान् विन्यस्य देवेशीं ध्यायेत्सारस्वतप्रदाम् ।
हंसारूढां लसन्मुक्ताधवलां शुभ्रवासशम ॥ ८ ॥

---

( १ ) 'कल्पयेत्' इति पाठान्तरम् ।

शुचिस्मितां चन्द्रमौलिं वज्रमुक्ताविभूषिताम् ।
विद्यां वीणां सुधाकुम्भं अक्षमालां च बिभ्रतीम् ॥९॥
एवं ध्यात्वा जपेन्मत्रं रविलक्षं समाहितः ।
सहस्रदशकं जुहुयात्सितपद्मैः प्रसन्नधीः ॥ १० ॥
अथवा देवदेवेशि जुहुयान्नागचम्पकम् ।
मातृकां च लिखेद्यन्त्रं पीठं तद्वत्प्रपूजयेत् ॥ ११ ॥
तत्र वाणीं समावाह्य पूजयेदुपचारकैः ।
आदावङ्गानि सम्पूज्य परिवारान्समर्चयेत् ॥ १२ ॥
पार्श्वयोर्देवतायास्तु संस्कृतान् प्राकृतान् यजेत् ।
प्रज्ञा मेधा श्रुतिः शक्तिः स्मृतिर्वागीश्वरीति च १३
सुमतिः स्वस्तिरित्येता वसुपत्रे प्रपूजयेत् ।
मातरस्तु दलाग्रे तु सम्पूज्याः परमेश्वरि ॥ १४ ॥
इन्द्रादयस्तु भूबिम्बे पुनर्देवीं समर्चयेत् ।
पारिजातेश्वरी विद्या दुर्लभा भुवनत्रये ॥ १५ ॥

इति दक्षिणामूर्तिसंहितायां पारिजातेश्वरीवाणी-
विद्याविधिः सप्तविंशः पटलः ॥ २७ ॥

---

(१) 'चाथ' इति पाठान्तरम् ।

## अथाष्टाविंशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि पञ्चवाणोश्वरीं शिवाम् ।
त्रिपुरेशीतन्त्रमध्ये वाणाः प्रोक्ता महेश्वरि ॥ १ ॥
तैरेव पञ्चभिर्बाणैर्विद्या पञ्चाक्षरी भवेत् ।
ऋषिरस्यास्ति मदनो गायत्री छन्द उच्यते ॥ २ ॥
कामेश्वरी च वीजादि देवता चेयमीश्वरी ।
व्यस्तैः समस्तैरङ्गानि पञ्चकामैरथार्चयेत् ॥ ३ ॥
पूर्वोक्तं पञ्चवाणानां न्यासं कुर्य्याद्विचक्षणः ।
पञ्चकामांश्च विन्यस्य पूर्ववत्परमेश्वरि ॥ ४ ॥
उद्यद्दिवाकराभासां नानालङ्कारभूषिताम् ।
वन्धूककुसुमाकाररक्तवस्त्राङ्गरागिणीम् ॥ ५ ॥
इक्षुकोदण्डपुष्पेषुविराजितभुजद्वयाम् ।
एवं ध्यात्वा वर्णलक्षं जपेन्मन्त्रं समाहितः ॥ ६ ॥
तद्दशांशेन जुहुयात् यन्धूककुसुमैः पराम् ।
कामेश्वरीं च सम्पूज्य विशेषं वाणपूजनम् ॥ ७ ॥
त्रिपुरेशीव सम्पूज्य मोहयेज्जगतीमिमाम् ॥

इति दक्षिणामूर्तिसंहितायां पञ्चवाणेशीयजनविधि-
र्नामाष्टाविंशः पटलः ॥ २८ ॥

---

( १ ) 'पूजयेत्' इति पाठान्तरम् ।

# अथैकोनविंशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये पञ्चकामनायिकां विश्वमातरम् ।
पूर्वोक्तपञ्चकामैस्तु पञ्चकामेश्वरी भवेत् ॥ १ ॥
ऋषिः संमोहनो नाम गायत्रं छन्द उच्यते ।
देवतेयं कामचाद्यं वीजशक्तिस्तु कीलकम् ॥ २ ॥
अन्यत्स्वयं न्यसेन्मन्त्री व्यस्तैश्चैव समस्तकैः ।
अङ्गानि पूर्ववत्कामवाणान्न्यस्य स्वयं यजेत् ॥ ३ ॥
रक्तां रक्तदुकूलाङ्गलेपनां रक्तभूषिताम् ।
पाशाङ्कुशधनुर्बाणान्पुस्तकं चाक्षमालिकाम् ॥ ४ ॥
वराभीती च दधती त्रैलोक्यवशकारिणी ।
अन्यत्सर्वं पूजनादि पञ्चवाणेश्वरीव वै ॥ ५ ॥
पञ्चकामैः परिवृता विशेषोऽयं निगद्यते ॥

इति दक्षिणामूर्तिसंहितायां पञ्चकामेश्वरीपजनविधिरेकोनत्रिंशः पटलः ॥ २९ ॥

---

( १ ) कामः क्लीं बीजं, आद्यं ह्रींशक्तिः, अन्यत् ऐंकीलकमित्यर्थः ।

## अथ त्रिंशः पटलः ।

### ईश्वर उवाच—

अथ वक्ष्ये महेशानि कुमारीं विश्वमातरम् ।
कामेश्वरीं भगवतीं त्रैलोक्याकर्षणक्षमाम् ॥ १ ॥
वाग्भवं त्रिपुरेशान्या हित्वा तत्सङ्क्षिपेत्सुधीः ।
कामशक्तिद्वया[1]न्ते तु विधेयं त्र्यक्षरी भवेत् ॥ २ ॥
त्रिपुरेश्यन्तरा विद्या बीजशक्तिक्रमेण तु ।
आद्यन्ते कीलकं मध्ये महावश्यकरी भवेत् ॥ ३ ॥
द्विरावृत्या षडङ्गानि पञ्चबाणान्प्रविन्यसेत् ।
पञ्चकामांश्च विन्यस्य मूलेन व्यापकं न्यसेत् ॥ ४ ॥
कामेश्वरीमहायन्त्रमध्ये देवीं प्रपूजयेत् ।
विशेषं शृणु तत्रैव बाणस्थानेषु पार्वति ॥ ५ ॥
पञ्चवाणान्प्रपूज्यैव रत्यादित्रितयं यजेत् ।
ततोऽनङ्गाद्यष्टकं च स्याद्भैरवस[2]मातरम् ॥ ६ ॥
अष्टपत्रेषु चाग्रेषु यजेत्पीठाष्टकं प्रिये ।
इन्द्रादयश्च सम्पूज्या मध्ये देवीं समर्चयेत् ॥ ७ ॥
पुरश्चरणकृत्यं तु त्रिपुरेशीव सुन्दरि ।
एनां स्मरन्महेशानि मोहयेज्जगतीमिमाम् ॥ ८ ॥

---

( १ ) 'द्वयोर्मध्ये' इति पाठान्तरम् ।
( २ ) 'भैरवाष्टकमातरः' इति पाठान्तरम् ।

उद्यत्सूर्यसहस्राभां माणिक्यवरभूषणाम् ।
स्फुरद्रत्नविह्वलास्यां नानालङ्कारभूषिताम् ॥ ९ ॥
इक्षुकोदण्डवाणानां पुस्तकं चाक्षमालिकाम् ।
दधतीं चिंतयेन्नित्यां सर्वराजवशङ्करीम् ॥ १० ॥

इति दक्षिणामूर्तिसंहितायां कल्पलताविद्यायजन-
विधिस्त्रिंशः पटलः ॥ ३० ॥

## अथैकत्रिंशः पटलः ।

देव्युवाच—

पञ्च पञ्च महाविद्या सूचिता न प्रकाशिता ।
श्रोतुमिच्छामि देवेश कृपां कुरु ममोपरि ॥ १ ॥

ईश्वर उवाच—

सिद्धविद्यां प्रवक्ष्यामि स्मरणेनापि सिद्धिदाम् ।
कामदामर्थदां नित्यां सर्वैश्वर्य्यप्रदां प्रिये ॥ २ ॥
शिवोऽग्निर्वामनयनबिन्दुनादकलात्मकम् ।

---

( १ ) 'श्रवणेनापि' इति पाठान्तरम् ।

( २ ) शिवो हकारः अग्निः रः वामनयमं ई 'बिन्दुनादक'लात्मकं ह्रीं इत्यर्थः ।

श्रीकामयुगलं प्रोक्ता मदनो भगवत्यपि ॥ ३ ॥
माहेश्वरी चतुर्वर्णमन्नपूर्णे ततो लिखेत्।
चतुर्थ्यां वह्निजायान्तो ताराद्यो मनुरीरितः ॥ ४ ॥
द्विदशार्णा महेशानि प्रातरेव समर्चयेत्।
अस्याः स्मरणमात्रेण पलायन्ते महापदः ॥ ५ ॥
ऋषिर्ब्रह्माऽस्य मन्त्रस्य षष्टिश्छन्दोऽभिधीयते।
अन्नपूर्णेश्वरी सिद्धाविद्येयं देवता प्रिये ॥ ६ ॥
बीजशक्ती कीलकं च हृल्लेखैव प्रकीर्तिता।
षडङ्गस्वरसम्भिन्नां हृल्लेखां कुरु पार्वति ॥ ७ ॥
एभिरङ्गानि विन्यस्य वर्णन्यासं समाचरेत्।
ब्रह्मरन्ध्रे च सीमन्ते भाले भ्रूमध्ययोर्नासि ॥ ८ ॥
वक्त्रे[१] कण्ठे च हृदये अक्षि[२]नाभिसुलिङ्गके।
आधारे स्फिगद्वये चोरुद्वये जानुद्वये तथा ॥ ९ ॥
पादयोर्देवदेवेशि पदन्यासं ततो न्यसेत्।
नव[३]द्वारेषु देवेशि पदन्यास उदाहृतः ॥ १० ॥
मूलेन व्यापकं न्यासं कूर्य्याद्देहस्य सिद्धये।
अथ यन्त्रं प्रवक्ष्यामि भोगमोक्षफलप्रदम् ॥ ११ ॥
त्रिकोणं षोडशारं च ततोऽष्टदलनीरजम्।

(१) 'नेत्रेति' इति पाठान्तरम्। (२) 'कुक्षि' इति पाठान्तरम्।
(३) नवद्वाराणि च-मुख १ नेत्र २ नासा २ कराङ्घ्रि २ लिङ्ग १ गुद १ रूपाणि।

भूबिम्बम्परमेशानि तारं मध्ये विनिक्षिपेत् ॥ १२ ॥
कोणत्रये त्रिवर्जानि प्रादक्षिण्येन योजयेत् ।
अग्रमारभ्य पूर्वादिकलापत्रे शृणु प्रिये ॥ १३ ॥
अवशिष्टाः कलाश्चैव पूर्वादिक्रमतो लिखेत् ।
अष्टपत्रस्य पत्रेषु लिखेद्दीर्घस्वरान्प्रिये ॥ १४ ॥
एतत्पठिं समभ्यर्च्य प्रणमेच्च तथा बुधः[1] ।
तत्र वश्यप्रदां देवीं मुद्राः साधारणा यजेत् ॥ १५ ॥
गन्धपुष्पादिभिः सम्यगभ्यर्च्य परितोषयेत् ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ १६ ॥
ध्यात्वा देवीं सिद्धविद्यां महाक्षीरान्तरेऽम्बुधौ[2] ।
रत्नद्वीपे लसत्स्वर्णप्राकाराभरणोज्वले ॥ १७ ॥
कल्पद्रुमविशोभाढ्ये सिंहासनसमन्विते ।
उद्यत्सूर्य्यसमाभासं[3] विचित्रवसनोज्वलाम् ॥ १८ ॥
चन्द्रव्रीडालसद्दामनिरतां रत्नभूषिताम् ।
सुवर्णकलशाकारस्तनभारोन्नतां पराम् ॥ १९ ॥
रुद्रताण्डवसानन्दाद्द्विभुजां परमेश्वरीम् ।
वरदाभयशोभाढ्यामन्नदानरतां सदा ॥ २० ॥
अथवा दक्षिणे दर्वीं दीर्घां ध्यायेत्सुवर्णजाम् ।

---

(१) 'प्रिये' इति पाठान्तरम् ।

(२) 'बुधः' इति पाठान्तरम् ।

(३) 'सहस्राभां इति पाठान्तरम् ।

दुग्धान्नभरितं पात्रं दिव्यरत्नविभूषितम् ॥ २१ ॥
वामहस्ते महेशानि ध्यात्वैवं परमेश्वरि।
पुरतस्ताण्डवप्रौढं रूद्रं सम्पूजयेत्प्रिये ॥ २२॥
द्वितीयेन तु बीजेन तृतीयेन हरिं यजेत्।
ब्रह्माणन्तुर्य्यबीजेन कलापत्रं ततो यजेत् ॥ २३ ॥
आदौ भवन्तु सा मोक्षदायिनी भयहारिणी।
गतिहंसी चराक्षीच तीर्थं नृपातितः परम् ॥ २४ ॥
मानदा देवदा स्वर्णदात्री रिपुनिकृन्तनी।
अनर्थध्वंसिनी देवी नयनानन्ददायिनी ॥ २५ ॥
पूतमूर्त्तिऋणघ्नी च स्वामिनी हरसुन्दरी।
षोडशान्तेऽन्नपूर्णायै नमस्कारक्रमेण तु ॥ २६ ॥
वर्णदेवीः समभ्यर्च्य वसुपत्रं ततो यजेत्।
ब्राह्म्यष्टकेन देवेशि चतुरस्रं ततो यजेत् ॥ २७ ॥
लोकपालैः पुनर्देवीं गन्धपुष्पादिभिर्यजेत्।
लक्षं जपेत्सनियमो दशांशने तु होमयेत् ॥ २८ ॥
रम्यपायससर्पिर्भ्यां सिद्धिदा भवति ध्रुवम्।
इति ते कथिता सिद्धा विद्या सत्फलदा प्रिये ॥२९॥

इति दक्षिणामूर्तिसंहितायां अन्नपूर्णाविधि-
रेकत्रिंशः पटलः ॥ ३१ ॥

## अथ द्वात्रिंशः पटलः ।

ईश्वर उवाच--

अथातः सम्प्रवक्ष्यामि मातङ्गीरत्नदेवताम् ।
वाग्भवं कामबीजं च सर्गवान्भृगुरुत्तमे ॥ १ ॥
अनुग्रहेण संयुक्तः पुनराद्यं परां लिखेत् ।
श्रीबीजं तारकं चैव नमो भगवतीति च ॥ २ ॥
मातङ्गेश्वरि सर्वान्ते मनोहरि जनादिकम् ।
सर्वराजवशं चान्ते करि सर्वमुखन्ततः ॥ ३ ॥
रञ्जनीति ततः सर्वस्त्रीशब्दं च ततो लिखेत्[1] ।
पुरुषान्ते वशञ्चोक्त्वा कर्यन्ते सर्वदुष्टतः ॥ ४ ॥
मृगान्ते वशमालिख्य सर्वलोकपदं[2] लिखेत् ।
कर्य्यादि वशमालिख्य[3] करिशब्दं ततो वदेत् ॥५॥
परां श्रियं कामबीजं[4] वाग्भवं नवमालिखेत् ।
सप्ततिश्च त्रयो वर्णा मातङ्गीविग्रहाः प्रिये ॥ ६ ॥
इयं समग्रविद्यानां राज्ञी मोक्षार्थसिद्धिदा ।
ऋषिर्मतङ्गो भगवान् गायत्रं छन्द उच्यते[5] ॥ ७ ॥
देवता नादमूर्तिस्तु मातङ्गी परमेश्वरी ।

---

( १ ) 'वदेत्' इति पाठान्तरम् ।
( २ ) 'करिसर्वस्तु लोककम्' इति पाठान्तरम् ।
( ३ ) वशङ्करि समुच्चार्य पराश्रीकामवाग्भवम्'इति पाठान्तरम् ।
( ४ ) इदमर्द्धं 'ख' पुस्तके नास्ति ।
( ५ ) सप्तमः श्लोकः "ख" "पुस्तके नास्ति ।

कामबीजं वाग्भवं च बीजशक्ती च कीलकम् ॥८॥
अम्भोजार्पितदक्षाङ्घ्रिं श्यामां ध्यायेन्मतङ्गिनीम् ।
कराह्लीणालसन्नादश्लाघान्दोलितकुण्डलाम् ॥ ९ ॥
दन्तपत्रप्रभां रम्यां सर्वसर्वाङ्गसुन्दरीम् ।
कादम्बमुण्डमालाढ्यां वीणावादनतत्पराम् ॥ १० ॥
श्यामाङ्गीं शङ्खवलयां ध्यायेत्सर्वार्थसिद्धये ।
अथ यन्त्रं प्रवक्ष्यामि त्रिकोणं पञ्चकोणकम् ॥ ११ ॥
वसुपत्रं कलापत्रं वसुपत्रं चतुर्दलम् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥ १२ ॥
आवाह्य देवतां सम्यगुपचारैः सम(१)र्च्य तु ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ १३ ॥
अथ वक्ष्ये महेशानि चतुर्द्वारस्य पूजनम् ।
अग्निद्वारश्चतुर्दिक्षु प्रादक्षिण्येन पूजयेत् ॥ १४ ॥
सरस्वतीं च लक्ष्मीं च शङ्खपद्मनिधी प्रिये ।
विदिक्षु वामभागादिप्रादक्षिण्येन पू(२)र्ववत् ॥ १५ ॥
बटुकं गणराजं च क्षेत्रपालं च योगिनीम् ।
यजेच्चतुर्दले देवि सिद्धमातङ्गिनीं क्रमात् ॥ १४ ॥
महालक्ष्मीमिमां सिद्धलक्ष्मीमातङ्गिनीं यजेत् ।
महामातङ्गिनीदेवीं प्रादक्षिण्येन पूजयेत् ॥ १७ ॥

---

( १ ) 'समर्चयेत्' इति पाठान्तरम् ।
( २ ) 'पूजयेत्' इति पाठान्तरम् ।

अष्टपत्रे महेशानि असिताङ्गादिभैरवाः ।
असितो रुरुचण्डौच क्रोध उन्मत्तभैरवः ॥ १८ ॥
कपाली भैरवश्चैव संहारश्चाष्टभैरवान् ।
प्रादक्षिण्येन देवेशि पुर आरभ्य पूजयेत् ॥ १९ ॥
वामा ज्येष्ठा च रौद्री च शान्तिः श्रद्धा च पञ्चमी ।
वागीश्वरी क्रियाशक्तिर्लक्ष्मी वृद्धिस्तथैव च ॥ २० ॥
मोहिनी प्रथमा ज्ञेया विद्या वै बिन्दुमालिनी ।
सुरानन्दा नागधुंधी(?)रेताः षोडश कीर्तिताः ॥ २१ ॥
पुर आरभ्य देवेशी प्रादक्षिण्येन पूजयेत् ।
षोडशारे ततो देवी लक्ष्मीश्चैव सरस्वती ॥ २२ ॥
रतिः प्रीतिः कीर्तिशान्ती पुष्टिस्तुष्टिश्च पूर्ववत् ।
पत्रान्तरेषु देवेशी मातृणां चाष्टकं यजेत् ॥ २३ ॥
पूर्ववद्यन्त्रपत्रेषु द्राविणीं शोषिणीं तथा ।
स्तम्भिनीं मोहिनीं देवीं तथाकर्षणकारिणीम् ॥ २४ ॥
त्रिकोणेऽपि हि देवेशि यजेदग्रादिपूर्ववत् ।
प्रादक्षिण्येन मनुविद्रतिप्रीतिमनोभवान् ॥ २५ ॥
पुनः सम्पूज्य देवेशीं सर्वां अप्सु स्मरेत्प्रिये ।
पुरश्चरणकाले तु क्षेत्रपालमुदाहृतम् ॥ २६ ॥
प्रवालमालया देवि तद्दशांशेन होमयेत् ।
मधुकदम्बकैर्मन्त्री त्रिकोणे कुण्डके शुचिः ॥ २७ ॥

एवं संसिद्धमन्त्रस्तु शर्वाणि सर्वसाधकः ।
राज्यार्थी मल्लिकाजातीपुन्नागैः श्रीफलच्छदैः ॥२८॥
श्रीकामुकः शुभ्रपद्मैः पङ्कजैर्वापि सुव्रते ।
उत्पलैर्भोगकामस्तु लक्ष्मीपुष्पैश्च सुव्रते ॥ २९ ॥
जवाबन्धूकबकुलकिंशुकैर्वश्यकारिणी ।
वश्यार्थी मधुसंयुक्तैर्मधूककुसुमैर्हुनेत् ॥ ३० ॥
आकर्षणे तु लवणैस्तिलैस्त्रिमधुसंयुतैः ।
वञ्जुलैर्वृष्टिकामस्तु खर्जूरैश्चागुरुद्रुमैः ॥ ३१ ॥
आयुःकामस्तु दूर्वाभिर्धनार्थी हेमपुष्पकैः[1] ।
वश्ये कदम्बकुसुमैर्धान्यार्थी धान्यतण्डुलैः ॥ ३२ ॥
साज्यान्नैरन्नकामस्तु वश्ये कुङ्कुमचन्दनैः ।
गन्धद्रव्यैस्तु सौभाग्ये नन्द्यावर्त्तैस्तु[2] स प्रिये ॥३३॥
करिपुष्पैः[3] सम्पदर्थी पालाशैस्तेजसे हुनेत् ।
कापिलेन घृतेनाथ ते श्वासकासहरं भवेत् ॥ ३४ ॥
उन्मादनकरो होम उन्मत्तकुसुमैर्भवेत् ।
विषवृक्षैश्च निम्बैश्च श्लेष्मातकविभीतकैः ॥ ३५ ॥
उलूकगृध्रकाकैश्च निम्बतैलपरिप्लुतैः ।
होमयेद्रिपुनाशाय वरास्रे वह्निकुण्डके ॥ ३६ ॥
पश्चाशाभिमुखो भूत्वा नग्नो दृष्टिमलीमसः[4] ।

---

( १ ) चम्पकपुष्पैरित्यर्थः । ( २ ) तगरपुष्पैरित्यर्थः ।
( ३ ) नागचम्पकैरित्यर्थः । ( ४ ) क्रोधाक्रान्तदृष्टिरित्यर्थः ।

उच्चाटने वायुभागे विद्वेषे राक्षसे भवेत् ॥ ३७ ॥
इन्द्राग्नेयविभागे वै शान्तिके प्राङ्मुखो भवेत् ।
पश्चिमे स्तम्भने[2] चोत्तरस्यां दिशि तु दैशिकः ॥३८॥
साधयेत्सर्वकर्माणि[3] पौष्टिकादीनि साधकः ।
पायसैर्गुडखण्डैश्च वंशजेक्षुरसैरपि ॥ ३९ ॥
पित्तशांतिकरो होमः सूर्य केवलमेव च ।
उन्मादने यत्प्रोक्तं पायसं घृतसंयुतम् ॥ ४० ॥
मरीचातिलतैलाक्तं कासश्वासहरम्भवेत् ।
निर्गुण्डीपुष्पहोमेन वातदोषं विनाशयेत् ॥ ४१ ॥
शृणुष्वाकर्षणं शीघ्रमाहुतित्रितयं कुरु ।
जीवन्यासं ततः कृत्वा मुक्ता(४)चक्रिगृहेथवा ॥४२॥
मधूच्छिष्टेन चान्यापि लवणेनापि पूत्रिकाः ।
कृत्वा तन्नामसकङ्कल्पमृदुकां कुंडले न्यसेत् ॥ ४३ ॥
सप्तांगुलमधःपश्चात् भारतीमेखलागतम् ।
लम्बयेदूर्ध्वतः पश्चात् त्र्यस्रे माक्षिकसम्भवम् ॥४४॥
लवणं पेष्य मधुना लावण्या होमयेत्सुधीः ।
आरभ्य दक्षिणं पादं वामपादावधि प्रिये ॥ ४५ ॥
मनुजानामयं होमः स्त्रीणां चैव विपर्य्ययः ।

---

( १ ) पश्चिमेस्तम्भनश्चैव चोत्तरेसर्वकार्यकृत्' इति पाठान्तरम् ।
( २ ) 'कार्याणि' इति पाठान्तम् ।
( ३ ) मुक्त्वा चक्रक्रमंतथा' इति पाठान्तरम् ।

सप्तरात्रान्महादेवि क्षुभ्यन्ति विरहातुराः ॥ ४६ ॥
पतन्ति साधकस्याग्रे भयलज्जाविवर्जिताः ।
लवणानि च तैलेन होमयेच्छत्रुनाशनम् ॥ ४७ ॥
हरिद्राचूर्णसंयुक्तं लवणं स्तम्भने हुनेत् ।
पूर्णायां पूर्वरात्रौ च शुभार्थं च यजेद् बुधः ॥ ४८ ॥
मध्याह्ने मध्यरात्रे च कुर्य्यादुच्चाटनादिकम् ।
मातङ्गीविग्रहो भूत्वा सर्वकर्माणि साधयेत् ॥ ४९ ॥
आवेशनं ततः कुर्य्यात्कन्यानामशनं सुधीः ।
कन्यापूजा च कर्तव्या योगिनीनां विशेषतः ॥ ५० ॥
अष्टाष्टकं समभ्यर्च्य मातङ्गीतृप्तिकृत्सुधीः ।
वलिं निवेदयेत्पश्चान्मातंग्यास्तु वरानने ॥ ५१ ॥
देवि शक्त्या नमस्यन्ति भगवत्यपि संलिखेत् ।
मातङ्गी च ततो ब्रूयाच्चाडालि पदमालिखेत् ॥ ५२ ॥
ततः सर्वजनं चोक्त्वा मे वशं च समालिखेत् ।
आनयेति च संयुक्तं द्विठान्तो मनुरुच्यते ॥ ५३ ॥
अनेन वलिदानं स्यान्मातङ्ग्याः सिद्धिदो भवेत् ।
वटुकादिवलिं तत्र सम्यगुत्क्षिप्य मातृका ॥ ५४ ॥
साधयेत्सर्वकर्माणि मातंग्याः सुप्रसादतः ।

इति श्रीदक्षिणामूर्तिसंहितायां मातंगेश्वरीरत्नविद्या-
विधिर्द्वात्रिंशः पटलः ॥ ३२ ॥

# अथ त्रयस्त्रिंशः पटलः ।

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि भुवनानन्दमन्दिरम् ।
यस्या विज्ञानमात्रेण पलायन्ते महापदः ॥ १ ॥
शिवं वह्निसमारूढं वामाक्षिपरिभूषितम् ।
बिन्दुनादकलाक्रातं विज्ञेयं भुवनेश्वरी ॥ २ ॥
ऋषिः शक्तिर्वशिष्ठः स्याद्गायत्रं छन्द उच्यते ।
देवता चित्कलारूपा भुवनेशी परात्मिका ॥ ३ ॥
शिवतुर्य्ये वीजशक्ती कलिकं रेफ उच्यते ।
ददाति भुवनेशानी पुरुपार्थचतुष्टयम् ॥ ४ ॥
अनन्तवामनेत्राभ्यां विद्यां सम्मेद्य मन्त्रवित् ।
षडङ्गानि च विन्यस्य हृल्लेखादि सकृन्न्यसेत् ॥ ५॥
अकाराद्यक्षपर्यन्तं विपरीतक्रमेण च ।
मातृकां संहरन् तत्र हृद्दोर्वक्षोविलोमतः ॥ ६ ॥
गुरूपदेशविधिना विलोमस्वरमार्गतः ।
संहारमातृकान्यासाद्ब्रह्मानन्दरसोज्वलः ॥ ७ ॥
एवं भूत्वा ततो मन्त्री षडङ्गैरङ्गुलीर्न्यसेत् ।
पुनरङ्गानि विन्यस्य चिदानन्देन तेजसा ॥ ८ ॥
कण्ठहृद्गुह्यपादेषु न्यसेत्पञ्चपदेश्वरः ।
हृल्लेखां गगनां रक्तां चतुर्थीं च करालिकाम् ॥ ९ ॥

महोष्मां च प्रविन्यस्य चिदानन्देन तेजसा ।
गायत्रीं चैव सावित्रीं तृतीयां च[1] सरस्वतीम् ॥ १० ॥
कण्ठे वामस्तने दक्षस्तने चैव त्रयं ततः ।
ब्रह्मविष्णुशिवाख्यं च बामांसे हृदये तथा ॥ ११ ॥
दक्षांसे च ततो न्यासो मातॄणां विन्यसेत्प्रिये ।
ललाटांशे वामभागे पार्श्वे कुक्षौ च दक्षिणे ॥ १२ ॥
ककुदौ पार्श्वकेशान्ते मूलेन व्यापकं न्यसेत् ।
पाशाङ्कुशवराभीतिमुद्रासन्नद्धविग्रहः ॥ १३ ॥
कुङ्कुमादिभिरभ्यर्च्य तद्द्रवै[2]र्विलेखेत् पठेत् ।
सुवर्णरौप्यताम्रादिराचरेद्देशिकोत्तमः ॥ १४ ॥
इन्द्रराक्षसवायव्यरेखाभिर्वह्निमण्डलम् ।
तन्मध्ये साध्यनामाङ्कशक्तिं संलिख्य नामकम् ॥ १५ ॥
ठकारैर्वेष्टितं कृत्वा कोणाग्रेषु परां लिखेत् ।
स्थानत्रयेपि बन्धस्तु कथ्यते सिद्धिदायकः ॥ १६ ॥
तद्बीजत्रयरेखाग्रप्रादक्षिण्येन वेष्टयत् ।
ईषत्तु त्रितयं चास्य मग्रे व्यञ्जन मीरयेत् ॥ १७ ॥
अन्योन्यकरमारभ्य शक्तिबन्ध उदाहृतः ।
त्रिकोणाभ्यन्तरालेषु वामनेत्रं सबिन्दुकम् ॥ १८ ॥

---

( १ ) 'यासरस्वत्यरुन्धती' इति पाठान्तरम् ।
( २ ) 'तण्डुलै'रिति पाठान्तरम् ।
( ३ ) ग्रेव्यञ्जनयोजयेत् ।

प्रत्येकं कोणपार्श्वेषु [1]हर्यर्णं च हराक्षरम् ।
पुनरेतद् द्वयं मध्ये [2]तुर्य्यं च सविसर्गकम् ॥ १९ ॥
इत्येतैर्वेष्टयेद्बाह्ये वृत्तं कृत्वा हरिस्तदा ।
पद्मं विरच्य वस्वस्नं केसरस्थानके पुनः ॥ २० ॥
[3]हर्यर्णं च हरान्तं च लिखेत्प्रतिदि[4]नं सुधीः ।
तुर्यस्वरं हरिस्तुर्यं हर इत्यपि संलिखेत् ॥ २१ ॥
[5]दलेषु च दलाग्रेषु वामनेत्रं च संलिखेत् ।
एतद्विगुणितं यन्त्रं हीरकस्वर्णराजितम् ॥ २२ ॥
कामदं मोक्षदं रम्यं सर्वैश्वर्य्यप्रदर्शकम् ।
अस्मिन्सम्पूजयेत्पीठशक्तिं सर्वार्थसिद्धये ॥ २३ ॥
जयां च विजयां चैव अजितामपराजिताम् ॥२४॥
नित्यां विलासिनीं दोग्ध्रीमघोरामघना[6]र्तिकाम् ।
अभ्यर्च्य परितः पीठं नवमीपीठमूलगाः ॥ २५ ॥
ध्यात्वा कुण्डलिनीरूपामुद्यद्भास्वत्समद्युतिम् ॥ २५ ॥
पाशाङ्कुशवराभीतिचतुर्बाहुं त्रिलोचनाम् ।

---

(१) 'हर्षणश्च' इति पाठान्तरम् ।
(२) 'तुर्यंचाऽपि स बिन्दुकम्' इति पाठान्तरम् ।
(३) 'हर्षणश्च' इति पाठान्तरम् ।
(४) 'प्रतिदले' सुधीः । इति पाठान्तरम् ।
(५) इदमर्द्धं 'ख' पुस्तके नास्ति ।
(६) सर्वमङ्गलाम्' इति पाठान्तरम् ।

ध्यात्वाऽऽवाह्य यजेद्देवीमुपचारैर्मनोहरैः ॥ २६ ॥
आवाहनीयमुद्रां तु दर्शयेद्देशिकोत्तमः ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ २७ ॥
पूजयेद्देशिकवरो भोगाङ्गभोगसिद्धये ।
[2]उऊ ओ गजडदंवलक्ष्मानां तु च पार्थिवाः ॥ २८ ॥
ऋॠऔघझंढधभवसहायस्तु नीरजाः ।
ईईऐखछठथफरक्षा आग्नेया ईरिताः ॥ २९ ॥
अआएकचटतपयषा वायुसमुद्भवाः ।
ऌॡअंङञणनमशहा बाभससंज्ञकाः ॥ ३० ॥
ऊर्द्ध्वे नेत्रस्य सौम्यादिप्रत्यक्षं परिपूजयेत् ।
वर्णान्समाहितो मन्त्री हल्लेखोद्यं ततः परम् ॥ ३१ ॥
पञ्चके पूजयेदेषु स्थानेषु निजसिद्धये ।
ऐन्द्रनैऋतयवायव्यकोणेषु क्रमतो यजेत् ॥ ३२ ॥
गायत्र्यादित्रयं पश्चाद्ब्रह्मादित्रयमर्चयेत् ।
आग्नेयवारुणेशानदिक्षु पूज्यास्ततः परम् ॥ ३३ ॥

---

( १ ) 'महादेवी'मितिपाठान्तम् ।

( २ ) उ अ च पयसावर्णा दवलानां तु पार्थिवाः । इति पाठान्तरम् ।

( ३ ) ॠ औ अजबावर्णावधरस्तनीरजाः । इति पाठान्तरम् ।

( ४ ) ॡ एई पेॡ छटायश्चकरक्षारक्ति संज्ञकाः । इति पाठान्तरम् ।

( ५ ) 'भुवनादित्रयंयजेत्' इति पाटान्तरम् ।

दलेषु मातरः पूज्या लोकपालार्च्चनं ततः ।

इति श्रीदक्षिणामूर्त्तिसंहितायां भुवनेश्वरीत्रिगुणित-
साधनविधिस्त्रयस्त्रिंशः पटलः ॥ ३३ ॥

## अथ चतुस्त्रिंशःपटलः ।

ईश्वर उवाच ।

अथातः सम्प्रवक्ष्यामि यन्त्रं षड्गुणितं प्रिये ।
यस्य विज्ञानमात्रेण सर्वसिद्धीश्वरो भवेत् ॥ १ ॥
पुटितं वह्निमालिख्य मध्ये शक्तिं नियोजयेत् ।
तच्छक्तिरेफभागे तु साध्यनामाक्षरं लिखेत् ॥ २ ॥
ठकारवेष्टितं कृत्वा बहिःशक्तिं तु पञ्चधा ।
विलिख्य तद्बहिस्तद्वच्छ्रींबीजं कामबीजकम् ॥ ३ ॥
पङ्क्तिशः पञ्चधा लेख्यं ततः षट्कोणसाधनम् ।
षट्कोणकोणकोणेषु वामनेत्रं सबिन्दुकम् ॥ ४ ॥
षट्कोणसन्धिषु पुनः शक्तिबीजं समालिखेत् ।
पूर्ववच्छक्तिबन्धस्तु कार्यःसंस्पर्शवर्जितः ॥ ५ ॥

उद्र्ध्वकोणत्रयस्यान्तरालेषु विलिखेत्सुधीः ।
साधकस्य सबिन्दूनि नामार्णानि ततः परम् ॥ ६ ॥
शक्तिश्रीकामबीजानि लिखेत्तत्रैव देशिकः ।
अधःकोणत्रयस्याथ त्वन्तरालेषु मन्त्रवित् ॥ ७ ॥
साध्याक्षराणि शक्तिश्रीकामबीजानि च क्रमात् ।
सविसर्गाणि संलिख्य विदर्भ्य गुरुसेवकः ॥ ८ ॥
कोणपार्श्वेषु सर्वत्र हरिवर्णौ हराक्षरौ ।
विलिख्य च ततो बाह्ये वृत्तं पूर्णेन्दुवत् कुरु ॥ ९ ॥
अनुलोमेन तद्वृत्तमध्ये पञ्चादशाक्षराः ।
तद्वृत्तबाह्यतस्तद्वद्विलोमेन च मातृका ॥ १० ॥
विज्ञेया वेष्टने देवि ततो भूयुगुलं लिखेत् ।
सम्पुटत्वेन देवेशि वसुकोणं तदा भवेत् ॥ ११ ॥
महादिक्षु नृसिंहस्य बीजमन्त्रं समालिखेत् ।
क्ष्रौमात्मकं नृसिंहस्य बीजं जानीहि पार्वति ॥ १२ ॥
रक्षोऽग्निपवनाधीशमनुस्वरविभूषितम् ।
बिन्दुनादकलाक्रान्तमयं चिन्तामणिः प्रिये ॥ १३ ॥
कोणेषु विलिखेन्मन्त्री ततः षट्कोणसन्धिषु ।
विलिख्य शूलान्प्रणवैस्ततः पद्मं समालिखेत् ॥१४॥
दलैर्द्वादशभीरम्यं बाह्यं तु परिजृम्भितम् ।

---

( १ ) 'राश्यर्णं परिद्बृम्भितम्' इति पाठान्तरम् ।

एतत्षड्गुणितं यन्त्रं सर्वैश्वर्यप्रवर्तकम् ॥ १५ ॥
तत्र बीजं समभ्यर्च्य समावाह्य च पूर्ववत् ।
उपचारैर्गन्धपुष्पैर्धूपदीपमनोहरैः ॥ १६ ॥
आवाहनादिमुद्राश्च दर्शयित्वार्चनं यजे¹त् ।
षट्कोणाग्नीशिनैरृत्यवायुमध्येषु दिक्षु च ॥ १७ ॥
षडङ्गावरणं कुर्य्याद्वितीयावरणं ततः ।
ब्रह्मणा सह गायत्रीं सावित्रीं विष्णुना सह ॥ १८ ॥
सरस्वतीं शिवेनैव श्रीस्तथा धनदेन च ।
मदनेन रतिं पुष्टिं कु²शलेन समर्चयेत् ॥ १९ ॥
षट्कोणपूर्वकोणादिप्रादक्षिण्येन पूजयेत् ।
रक्ताऽनङ्गादिकुसुमा तृतीया कुसुमातुरा ॥ २० ॥
नित्याऽऽनन्दादिमदना षष्ठी तु मदनातुरा ।
गौरी च गगना चैव तथा गगनवेगिनी ॥ २१ ॥
पद्माऽऽमयप्रमाथिनी तथा च शशिशेखरा ।
अथ द्वादशपत्रेषु पूर्वा³दिक्रमतो यजेत् ॥ २२ ॥
चतुर्दलानि सन्त्यज्य दिक्षु ब्राह्म्यादिकं यजेत् ।
भूगृहे लोकपालाः स्युरेतत्षड्गुणितं भवेत् ॥ २३ ॥
वामादिसिद्धयः सर्वा जायन्ते साधकस्य तु ।

---

(१) 'चारेत्' इति पाठान्तरम् ।
(२) 'गणयेन' इतिपाठान्तरम् ।
(३) 'पार्वति' इति पाठान्तरम् ।

पुनराराध्य नैवेद्यपुष्पैराराधनैः पराम् ॥ २४ ॥

इति श्रीदक्षिणामूर्तिसंहितायां भुवनेश्वरीषड्गुणि-
तयन्त्रसाधनञ्चतुस्त्रिंशःपटलः ॥ ३४ ॥

## अथ पञ्चत्रिंशःपटलः ।

ईश्वर उवाच ।

अथ त्रिगुणितं वक्ष्ये यन्त्रं सर्वोत्तमोत्तमम् ।
यस्य विज्ञानमात्रेण भुवनाधीश्वरो भवेत् ॥ १ ॥
षट्कोणं पूर्वमुद्धृत्य पश्चात्तत्सन्धिभेदनः ।
षट्कोणान्तरमुत्पाद्य भवेद् द्वादशकोणकम् ॥ २ ॥
तन्मध्ये शक्तिमालिख्य पूर्वोक्तेन विधानतः ।
ठकारमध्ये तद्बाह्ये वेष्टयेत्प्रतिलोमतः ॥ ३ ॥
सम्यग् व्याहृतिभिर्मंत्री ततः षट्कोणसिद्धिषु ।
विलिख्य भुवनेशानीं द्वादशस्थानजृम्भिताम् ॥ ४ ॥
पूर्ववच्छक्तिबन्धं तु कुर्याद् द्वादशधा प्रिये ।
एकैकान्तरितं कुर्यान्मनोज्ञं मण्डलं शुभम् ॥ ५ ॥

हुमात्मकं द्वादशारे सबिन्दुतूर्यमालिखेत् ।
तदूर्ध्वं रविकोणेषु सर्वकामार्थसिद्धये ॥ ६ ॥
अथ द्वादशकोणस्य सन्धिबीजान्तरालतः ।
शूलानि विलिखेन्मंत्री ततः कोणकपोलयोः ॥ ७ ॥
एकैकस्य च कोणस्य गायत्रीं च समालिखेत् ।
तत्पदं सवितुर्वान्ते णियं रे व्युत्क्रमाल्लिखेत् ॥ ८ ॥
भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।
एतदष्टाक्षरं देवि गुह्यान्ते परिकीर्तितम् ॥ ९ ॥
चतुर्विंशत्यक्षरेण गायत्री वेदमातृका ।
द्वन्द्वशो विलिखेद्वर्णान्गायत्र्याश्च विलोमतः ॥ १० ॥
तद्बहिः कोणपार्श्वे तु विलोमाग्नेयसन्मनुम् ।
प्रणवं भूर्भुवःस्वाग्रे लिखेदेतत् षडक्षरम् ॥ ११ ॥
जातवेद इहालिख्य वह सर्वचतुष्टयम् ।
कर्माणि साधय स्वाहा विद्याग्नेयस्य दुर्लभा ॥ १२ ॥
लिखेत्ततः परं देवि सर्वकार्य्यार्त्[1]मासिद्धये ।
अनुलोमाविलोमां च मातृकां वेष्टयेत्ततः ॥ १३ ॥
भूपुरं पूर्ववद्बीजमण्डितं संलि[2]खेत्ततः ।
तद्बहिस्तु कलापत्रं द्वात्रिंशत्केसरान्वितम् ॥ १४ ॥

---

(१) 'कार्यादि' इति पाठान्तरम् ।
(२) 'मण्डलं लिखेत' इति पाठान्तरम् ।

महार्कगुंफितं देवि निगमागममन्दिरम्।
पूर्ववत्पीठमभ्यर्च्य देवीमावाह्य पूर्ववत्॥ १५॥
परिवारार्चनं कुर्य्यादादावङ्गार्चनं प्रिये।
हृल्लेखापञ्चकं वर्गसहितं पूर्ववद्यजेत्॥ १६॥
ब्रह्मादियुगषट्कं तु पृथक् द्वादशधा यजेत्।
कोणेषु पूर्वकोणादिकलास्त्राणि ततो यजेत्॥ १७॥
कराली विकराली च तथोमा च सरस्वती।
दुर्गा शची सुधा लक्ष्मीः श्रुति स्मृतिधृतित्रयम्॥१८॥
श्रद्धा मेधा धृतिः कांति गौर्य्यः षोडश कीर्त्तिताः।
पूर्वादिक्रमतः पूज्या दलाग्रेषु च सन्धिषु॥ १९॥
श्रीह्रीः पुष्टिः प्रजा[2] चैव सिनीवाली कूहू स्तथा।
रुद्रा वीर्य्या प्रमानन्दा पोषणी ऋद्धिदा तथा॥ २०॥
कालरात्रिर्महारात्रि र्भद्रकाली कपालिनी।
विकृतिर्नन्दिनी चैव मुण्डिनी च ततः परम्॥ २१॥
इंदुखण्डासिखण्डिन्यौ निशुंभमथनी तथा।
मर्दनी महिषस्यापि तथेन्द्राणी ततः परम्॥ २२॥
रुद्राणी शङ्कराधां च शरीरिण्यपि कीर्त्तिताः।
नारी नारायणी चैव त्रिशूलिन्यपि पालिनी॥ २३॥

---

(१) 'गुणितं' इति पाठान्तरम्।
(२) 'स्तु' इति पाठान्तरम्।
(३) 'प्रज्ञा' इति पाठान्तरम्।

अम्बिका ह्लादिनी ज्ञेया द्वात्रिंशच्छक्तिमण्डलम् ।
तद्बहिः पिङ्गलाक्षी च विशालाक्षी ततः प्रिये ॥२४॥
सम्बुद्धिर्वृद्धिर्वसुधा स्वाहा श्रद्धा तथैव च ।
स्कंदमाताच्युतप्रीतिर्विमला चामला तथा ॥ २५ ॥
अरुणी वारुणी चैव प्रकृतिर्विकृतिस्तथा ।
सृष्टिः स्थितिः संहृतिश्च संन्ध्या माता सनातनी ॥२६॥
हंसी च वाज्रिका[1] वज्री परा वेदादिमातृका[2] ।
तथा भगवती चैव देविका[3] कमलानना[4] ॥ २७ ॥
त्रिमुखी च तथा सप्तमुखी देशिकवन्दिते ।
सुरासुरादिसहिता मर्दनी च तथापरम्[5] ॥ २८ ॥
लंवोष्ठी चोद्‌र्ध्वकेशी च वहुशीर्षा वृकोदरी ।
वृकोदरी[6] तथा रेखा तथादिशाशिरेखिका ॥ २९ ॥
अपरा गगनादिश्च वेगा पवनवेगिका ।
तथा भुवनपाली च तथा च मदनातुरा ॥ ३० ॥
अनंगानंगमदना[7] तथानङ्गादिमेखला ।

---

( १ ) 'मर्छिका' इतिपाठः ।
( २ ) 'देवादि' इतिपाठः ।
( ३ ) देवकी' इतिपाठः ।
( ४ ) 'सनो' इतिपाठः ।
( ५ ) 'ततःपरम्' इति पाठः ।
( ६ ) 'वृद्धोदरी' इतिपाठः ।
( ७ ) 'अनङ्गाद्याङ्गमदना' इतिपाठः ।

अनङ्गकुसुमा चैव विश्वरूपा भयङ्करी ॥ २१ ॥
तथा क्षोभ्या महाक्षोभ्या[1] तथा वै सत्यवादिनी ।
रसरूपंतरा[2] ऽन्या वै वसुचित्ता परेश्वरी ॥ २२ ॥
वरदा चैव वागीशी एताः शक्तीस्तु पूजयेत् ।
प्रादक्षिण्यद्वयेनैव[3] सर्वकामार्थसिद्धये[4] ॥ २३ ॥
चतुःषष्टिमहाशक्तिपूजनं कथितं तव ।
तद्बहिर्लोकपालांश्च भूबिम्बे पूजयेत्प्रिये ॥ २४ ॥
पुनर्देवीं समभ्यर्च्य नैवेद्यादि समर्पयेत् ।
इति संकथितं सम्यग् देवानामपि दुर्लभम् ॥ ३५ ॥

इति श्रीदक्षिणामूर्तिसंहितायां भुवनेश्वरीद्वादशगु-
णितोद्धारः पञ्चत्रिंशः पटलः ॥ ३५ ॥

---

## अथ षट्त्रिंशः पटलः ।

### ईश्वर उवाच--

मुखवृत्तं बिन्दुनादकलाढ्यं पाश उच्यते ।

---

(१) 'असुराणां तथाक्षोभ्या' इतिपा० ।
(२) 'बहुरूपावाच्यचैव सुवृत्तापरमेश्वरी । इतिपा० ।
(३) 'क्रमेणैव' इतिपा० ।
(४) 'सिद्धिदा' इतिपा० ।

कामाग्नितार[1]रसहितमङ्कुशं विद्धि पार्वति ॥ १ ॥
एतन्मध्यगता विद्या यदा पूज्या सुरेश्वरी ।
अपरा[2] वाऽथ पञ्चार्णा ताभ्यां सम्पुटिता प्रिये ॥ २ ॥
तदा घटार्गलोद्धारः कथितो[3] भुवि दुर्लभः ।
येनानुष्ठितमात्रेण त्रैलोक्याकर्षणं भवेत् ॥ ३ ॥
संप्रदायेन देवेशि श्रीगुरोः कृपया प्रिये[4] ।
सम्यक् सूत्रेण रचयेत्सुवृत्तं वृत्तमुत्तमम् ॥ ४ ॥
ततो भूबिम्बयुगलं संपुटीकृत्य योजयेत् ।
अष्टकोणं तथा देवि जायतेऽतिम[5]नोहरम् ॥ ५ ॥
अष्टदिक्षु तदाग्रा[6]ऽभ्यां रेखामाकृष्य मांत्रिकः ।
रेखाभ्यामर्गलं देवि जायतेऽतीव सुन्दरम् ॥ ६ ॥
एकेनैव तु मानेन रचयेद[7]र्गलान्तरम् ।
वृत्तं तदग्रे चन्द्रस्य बिम्बवद्रचयेद् बुधः ॥ ७ ॥
पुना रेखाः समाकृष्य पूर्ववद् वृत्तमुत्तमम् ।
विरच्य साधकेन्द्रस्तु वसुकोष्ठयुगं क्रमात् ॥ ८ ॥
व्यक्तं यथा भवेद्देवि केसराणां वसुद्वयम् ।

---

( १ ) 'पाश' इतिपा० ।
( २ ) 'अक्षरी' इतिपा० ।
( ३ ) 'कथ्यते' इतिपा० ।
( ४ ) 'ऽन्विते' इतिपा० ।
( ५ ) 'दिङ्मनोहरम्' इतिपा० ।
( ६ ) 'तथाताभ्यां रेखे आकृष्य' इतिपा० ।
( ७ ) रचयेदर्गलाष्टकम्' इतिपा० ।

एतदग्राणि[1] रम्याणि यथा सम्यग्भवन्ति हि ॥ ९ ॥
तथा कार्य्यं महेशानि त्रैलोक्याकर्षणं भवेत् ।
शक्तिबीजं साध्यनाम साधकेन च साधकः[2] ॥ १० ॥
पाशांकुशमहाबीजयुगसंपुटितं यजेत्[3] ।
कर्णिकायां मध्यवृत्ते संलिखेत्साधकोत्तमः ॥ ११ ॥
अष्टपत्रेषु[4] विलिखेत् षडङ्गानि यथाक्रमम् ।
अग्नीशासुरवायव्यकोणेषु मनुं[5]रीरितः ॥ १२ ॥
कवचान्तानि संलिख्य मध्ये नेत्रं[6] नयेद् बुधः ।
चतुर्दिशं तु कोणेषु चतुर्द्धास्त्रं लिखेत्प्रिये ॥ १३ ॥
वृत्तादि वसुकोणांतं लिखेद्[7] द्वयदलेषु च ।
बीजवृन्दं महेशानि सम्प्रदायक्रमेण हि ॥ १४ ॥
शक्तिं वह्निं परित्यज्य तत्र भूभूषितं कुरु ।
तद्बीजं स्वरसाम्भिन्नं ऋॠलृॡविवर्जितम् ॥ १५ ॥
एवं द्वादशधा तच्च चतुर्द्धा कुरु सुन्दरि ।
आद्यं त्रिकं पूर्वमुख्यं लिखेदुत्तरतः पुनः[9] ॥ १६ ॥

---

(१) 'अर्गलानिच' इतिपा० । (२) 'साधितम्' इतिपा० ।
(३) लिखेत् इतिपा० ।
(४) 'कोणेषु' इतिपा० ।
(५) 'मुनिवित्तमः' इतिपा० ।
(६) 'नेत्रंलिखेद्बुधः' इतिपा० ।
(७) 'लिखेद्वर्गदलेषुच' इतिपा० ।
(८) 'हीनं' इतिपा० ।
(९) 'प्रिये' इतिपा० ।

द्वितीयं पूर्वमुख्यं तु लिखेद्दक्षिणतः सुधीः ।
तृतीयं पश्चिमे भागे तथा दक्षिणतो लिखेत् ॥ १७ ॥
चतुर्थे त्वर्गलं तद्वत्पश्चिमेत्युत्तरान्तिकम् ।
भुवं हित्वाऽर्कबीजानां तत्र वायुं नियोजयेत् ॥ १८ ॥
अग्न्यर्गलाख्यां त्रितयमाद्यं पूर्वत आलिखेत् ।
तथा पश्चिमतो ऽप्यन्यत् त्रिकं संलिख्य मान्त्रिकः१९
मारुतार्गलकं तद्वल्लिखेत्पश्चिमतस्त्रिकम[1] ।
पूर्वतोऽपि च देवेशि सर्वकार्यात्मसाधकः ॥ २० ॥
घंटार्गलाय[2] देवेशि कथयामि वरानने ।
वायुं हित्वार्कबीजानां[3] वरुणं तत्र निक्षिपेत् ॥ २१ ॥
बीजवृन्दं महेशानि सम्प्रदायक्रमेण हि ।
शक्तिं वह्निं परित्यज्य तत्र भूभूषिकं कुरु ॥ २२ ॥
तद्बीजं स्वरसम्भिन्नं ऋॠऌॡविवर्जितम् ।
एवं द्वादशधा तच्च चतुर्धा कुरु सुन्दरि ॥ २३ ॥
आद्यं त्रिकं पूर्वमुख्यं लिखेच्च पुरतः पुनः ।
द्वितीयं पूर्वमुख्यं तु लिखेद्दक्षिणतः सुधीः ॥ २४ ॥
तृतीयं दक्षिणे भागे तथा दक्षिणतो लिखेत् ।
चतुर्थेन कुले तद्वत्पश्चिमादुत्तमान्तकम् ॥ २५ ॥

---

(१) 'पश्चिमतः प्रिये' इतिपा० ।
(२) 'यमार्गलाय' इतिपा० ।
(३) 'बीजानि' इतिपा० ।

भुवं हित्वा तथा तत्र वायुबीजं नियोजयेत् ।
अग्नीशानार्यत्रितयमाद्यं पूर्ववदालिखेत् ॥ २६ ॥
[1]पूर्वतश्चापि त्रितयं द्वितीयं पश्चिमागतम् ।
अथोत्तरार्गलायां च लिखेत्पश्चिमतः सुधीः ॥ २७ ॥
चतुर्थात्पूर्वतो देवी स्फुरणात्सुरसुन्दरि ।
वीरं हित्वार्कवीजानां रेफं तत्र विनिक्षिपेत् ॥ २८ ॥
लिखेद्रक्षार्गलायां तु त्रिकमाद्यं त्रिकं परम् ।
दक्षिणोत्तरतो मन्त्री क्रमेणेशदले[2] पुनः ॥ २९ ॥
आदावुत्तरतो देवि पश्चाद्दक्षिणमादितः[3] ।
अन्तराऽष्टसु कोष्ठेषु केसराख्येषु संलिखेत् ॥ ३० ॥
पाशश्रीतुरगेशानी[4] कामबीजचतुष्टयम् ।
विपरीतं च मन्त्रज्ञो वसुर्नारदमालिखेत्[5] ॥ ३१ ॥
अन्त्यपाशं परित्यज्य सृणिं संयोज्य साधकः ।
तद्बहिर्वसुकोष्ठेषु विलिखेत्तत्क्रमेण च ॥ ३२ ॥
कामिन्यन्ते रञ्जिनी स्यात् ततोऽग्रे ऽप्यग्निवल्लभा ।
अष्टवर्णानुक्तरूपानपरान्केसरेषु च ॥ ३३ ॥

---

( १ ) वायुंहित्वा-इत्यारभ्य 'पूर्वतश्चाऽपि' इतिपर्यन्तं 'ख' पुस्तकेनास्ति ।

( २ ) 'क्रमाच्छैवार्गलेपुनः' इतिपा० ।

( ३ ) 'दक्षिणमार्गतः' इतिपा० ।

( ४ ) 'भुवनेशानी' इतिपा० ।

( ५ ) 'वस्वर्णमिदमालिखेत्' इतिपा० ।

अन्तः कोष्ठस्वरूपेषु चण्डकात्यायनीं लिखेत् ।
शक्तिगौरीत्रिकं रुद्रदयिते पञ्चवर्णकम् ॥ ३४ ॥
योगेश्वरीं समालिख्य कवचास्त्राग्निवल्लभा ।
चण्डकात्ययनी विद्या त्रिषु लोकेषु दुर्लभा ॥ ३५ ॥
अथातः सम्प्रवक्ष्यामि बहिरस्यैव वेष्टनम् ।
हंसः पदं वामनेत्रं बिन्दुना[1] परिभूषितम् ॥ ३६ ॥
पुनर्हंसपदं चैतत्पंचार्णं मनुमालिखेत् ।
स्वरद्वन्द्वोदरगतं सप्तार्णं चाष्टधा भवेत् ॥ ३७ ॥
बहिः पद्मं चाष्टपत्रमतिसुन्दरमालिखेत् ।
दलेषु कर्णिकामंत्रस्त्रिपंक्त्याद्यष्टसु क्रमात् ॥ ३८ ॥
पाशाङ्कुशाभ्यां तद्बाह्ये वृत्ताकारेण वेष्टयेत् ।
अनुलोमप्रकारेण मातृकावेष्टनं लिखेत् ॥ ३९ ॥
तथैव प्रतिलोमं च मातृकावेष्टनं प्रिये ।
एतत्सर्वं ठकारेण वेष्टयेन्महता प्रिये ॥ ४० ॥
घटार्गलं महायन्त्रं पुरुषार्थफलदम् ।
अस्मिन्समावाह्य देवीमुपचारैः समर्चयेत् ॥ ४१ ॥
आदौ[2]वन्तेषु देवेशि देव्यङ्गेषु च विन्यसेत् ।
आनन्दरूपिणीं ध्यात्वा मुद्रासन्नद्धविग्रहः ॥ ४२ ॥
परिवारार्चनं कुर्यात्प्रथमावरणं शृणु ।

---

( १ ) 'बिन्द्विन्दुपरिभूषितम्' इति पा० ।
( २ ) 'आदावङ्गानि देवेशिकराङ्गेषु च विन्यसेत्' । इति पा० ।

हृल्लेखां पञ्चकंचाद्यं द्वितीयाङ्गावृतिः[1] प्रिये ॥ ४३ ॥
कोणाष्टके यथा पूर्वं ततः पद्मदलेषु च ।
मातरो देवदेवेशि पूर्वादि परिपूजयेत् ॥ ४४ ॥
लोकपालाश्च तद्बाह्ये पुनराद्यां[2] समर्चयेत् ।
उपचारैर्मनोरम्यैस्ताम्बूलान्तैः पृथक् पृथक् ॥ ४५ ॥
यथाशक्ति जपं कुर्य्यान्नियमेन तु सुन्दरि ।
अयं नित्याप्रकारस्तु पुरश्चरणकं शृणु ॥ ४६ ॥
रविलक्षं जपेद्विद्यां तद्दशांशेन होमयेत् ।
त्रिमध्वाक्तैः[3] क्षीरवृक्षसमिद्भिश्च तथा तिलैः ॥ ४७ ॥
समासेन हुनेत्सम्यक् पुरश्चारी ततो भवेत् ।
जातीपुष्पैर्वश्यकामे संपत्यै कमलैः प्रियेः ॥ ४८ ॥
समिद्भिः पुष्टिकामस्तु खदिरैर्जुहुयात् प्रिये ।
एकाक्षरेपि देवेशि सन्त्यत्र भुवनानि तु ॥ ४९ ॥
व्योमबीजे महेशानि कैलासादिप्रतिष्ठितम् ।
बह्निबीजात्सुवर्णादि निष्पन्नं वहुधा प्रिये ॥ ५० ॥
तेनायं वर्तते लोको भूमिमण्डलसंस्थितः[4] ।
चतुः[5]स्वरेण पाताले शेषरूपेण धार्यते ॥ ५१ ॥

---

( १ ) 'द्वितीयं चाङ्गकैः प्रिये' इति पा० ।
( २ ) 'पुनरेनां समर्चयेत्' इति पा० ।
( ३ ) मध्वक्तैः क्षीरवृक्षस्य समिद्भिश्च तथा तिलैः । इति पा० ।
( ४ ) 'भूमण्डलसमस्थितिः' इति पा० ।
( ५ ) 'तुर्यस्वरेण' इतिपाः ।

तेनायं वर्तते लोको भूमिमण्डलसंस्थितः (१) ।
चतुः(२)स्वरेण पाताले शेषरूपेण धार्यते ॥ ५१ ॥
महाभूमण्डलं तस्मात्पातालस्यापि नायिका ।
अत एव महेशानि भुवनाधीश्वरी प्रिये ॥ ५२ ॥
हकारे व्योमतुर्य्येण स्वरेणानिलसम्भवः ।
विकारे सति रेफेण साक्षाद्वह्निस्वरूपिणी ॥ ५३ ॥
(३)वह्निबीजं वसु ज्ञेयं तस्माद्रेफं च सुंदरि ।
अतएव महेशानि आ(४)र्वयोः समता भवेत् ॥ ५४ ॥
बिन्दुचन्द्रामृता देवी प्लावयन्ती जगत्त्रयम् ।
प्लँ(५)वरूपा भवेत्तस्मात्सृजन्ती चार्द्धमात्रया ॥ ५५ ॥
अतएव महेशानि भुवनेशी च कथ्यते ॥

इति श्रीदक्षिणामूर्त्तिसंहितायां घटार्गलयन्त्रसाधनं
षट्त्रिंशः पटलः ॥ ३६ ॥

---

( १ ) 'भूमण्डलसमस्थितिः' इति पा० ।
( २ ) 'तुर्यस्वरेण' इति पा० ।
( ३ ) 'वह्निवीर्यवसुज्ञेयं तस्माद्रेफवसुन्धरा' । इति पा० ।
( ४ ) 'रलयोः' इति पा० ।
( ५ ) 'द्रवरूपा' इति पा० ।

## अथ सप्तत्रिंशः पटलः ।

### ईश्वर उवाच—

पञ्चमीं रत्नदेवेशीं कथयामि शृणु प्रिये ।
यस्याः स्मरण[1]मात्रेण पवनोपि स्थिरो भवेत् ॥ १ ॥
वाग्भवं बीजमुच्चार्य्य गलानुग्रहबिन्दुभिः[2] ।
नादेन भूषितं बीजं वाग्भवं[3] चोच्चरेत्ततः ॥ २ ॥
पुनरन्त्यं[4] ततो भान्ते गवतीति समालिखेत् ।
वार्तालियुग्मं वाराही पुनरेतद्द्वयं[5] लिखेत् ॥ ३ ॥
वाराहमुखि सद्वन्द्वं सन्धिहीनं ततः परम् ।
अन्धे चान्धिनि सप्तार्णं हृदयान्ते भवेत्प्रिये ॥ ४ ॥
रुन्धे रुन्धिन्यतो हृच्च जम्भे जम्भिनि हृत्तथा ।
मोहे मोहिनि हृच्चापि स्तम्भे स्तम्भिनि हृत्ततः ॥ ५ ॥
एतदुक्त्वा महेशानि सर्वदुष्टप्रदुष्टकान् ।
सानन्तानां च सर्वेषां सर्ववागितिचित्त च ॥ ६ ॥
चक्षुर्मुखगतिं चोक्ता जिह्वास्तम्भं कुरुद्वयम् ।
शीघ्रं वश्यं कुरुद्वन्द्वं वाग्भवं पार्थिवं पुनः ॥ ७ ॥

---

( १ ) 'श्रवणमात्रेण' इति पा० ।
( २ ) 'बिन्दुयुक्' इति पा० ।
( ३ ) 'पार्थिवं' इति पा० ।
( ४ ) पुनराद्यं नमश्चान्ते भगवतीसमालिखेत् । इति पा० ।
( ५ ) 'त्रयं' इति पा० ।

ठकारश्चतुरस्यान्ते कवचास्त्राग्निवल्लभा ।
विद्या[1] दशोत्तरशतमन्त्रवर्णा भवेत्प्रिये ॥ ८ ॥
चतुश्चत्वारिंशतिभिः पदैर्न्यासस्तु कीर्तितः ।
मातृकां विन्यसेद्धक्ते पदानि दश मन्त्रवित् ॥ ९ ॥
दोःपत्सन्धिषु साग्रेषु न्यसेद्विंशतिसंख्यकान् ।
पदार्णान्यथ विन्यस्य पार्श्वयोरे[2]ङ्कमुत्तमम् ॥ १० ॥
अनेनैव प्रकारेण मातृकां विन्यसेत्सुधीः ।
ततः षडङ्गविन्यासं कुर्य्याद्देहस्य सि[3]द्धये ॥ ११ ॥
वार्ताल्यास्तु पदद्वन्द्वं हृदयं च ततः परम् ।
वाराहियुगलं देवि शिरोमन्त्र उदाहृतः ॥ १२ ॥
वाराहमुखियुग्मं तु शिखासप्ताक्षरं ततः ।
कवचं च ततः सप्तवर्णैर्नेत्रं न्यसेत्क्रमात् ॥ १३ ॥
यन्त्रोद्धारं प्रवक्ष्यामि येन त्रैलोक्यमोहनम् ।
ताम्रे वा राजते स्वर्णमये वा भूर्जपत्रके ॥ १४ ॥
लिखेद्रोचनया वापि कुङ्कुमागुरुचन्दनैः ।
हरिद्रया वा[4]रुणया विलिखेच्च मनोहरम् ॥ १५ ॥

---

( १ ) चतुर्दशोत्तरशतं मन्त्रवर्णा भवन्ति हि । इति पा० ।
( २ ) 'पार्श्वयोरेकमुत्तमम्' इति पा० ।
( ३ ) 'देहविशुद्धये' इति पा० ।
( ४ ) 'चतुणया' इति पा० ।

त्रिकोणं पञ्चकोणं च षट्कोणं वसुपत्रकम् ।
शतपत्रं सहस्रारं ततो भूबिम्बमालिखेत् ॥ १६ ॥
चतुर्द्वारविशोभाढ्यं मध्ये सिंहासनं यजेत् ।
वाणीभूबीजयुग्मेन संपूज्याः सर्वमातरः ॥ १७ ॥
स्फटिकाकारमध्यस्थं पीठमेतद्विचिन्तयेत् ।
देवीमावाहयेत्तत्र ध्यानं कुर्य्याद्विचक्षणः ॥ १८ ॥
प्रत्यग्रारुणसङ्काशां पद्मासनसु[1]संस्थिताम् ।
इन्द्रनीलमहातेजःप्रकाशां विश्वमातरम् ॥ १९ ॥
रुण्डं च मुण्डमालाढ्यां नवरत्नादिभूषिताम् ।
अनर्घ्यरत्नघटितमुकुटश्रीविराजिताम् ॥ २० ॥
कौशि[2]काद्धोरुकां चारुप्रवालमणिभूषिताम् ।
हलेन मुसलेनापि वरदेनाभयेन च ॥ २१ ॥
विराजितचतुर्बाहुं कपिलाक्षीं सुमध्यमाम् ।
नितम्बिनीमुत्पलाभां कठोरघनसत्कुचाम् ॥ २२ ॥
लोलाननां यजेद्देवीमुपचारैः सहेतुभिः ।
गन्धपुष्पादिभिः सम्यक् सर्वकामार्थसिद्धये ॥ २३ ॥
सप्त[3]भिश्च सहस्राणि पुरश्चरणसिद्धये ।
तद्दशांशेन वै होमस्तिलैर्बन्धूकपुष्पकैः ॥ २४ ॥

(१) 'पद्मान्तर्गतस्थितिः' इति पा० ।
(२) 'केयूराद्धोरुकाम्' इति पा० ।
(३) 'दशसप्तसहस्राणि' इति पा० ।

त्रिमध्वक्तैर्हेतुमिश्रैर्हरिद्राचन्दनैर्हुनेत् ।
लाक्षागुरुपुरुद्रव्यैः पिशितैर्विविधैरपि ॥ २५ ॥
सिद्धिर्भवति देवेशि मन्त्रिणो नात्र संशयः ।
शृणु पूजाविधानं तु देवीमावाह्य सिद्धये ॥ २६ ॥
आदावङ्गावृतिं यष्ट्वा अग्नीशासुरवायुषु ।
मध्ये दिक्षु त्रिकोणान्तस्त्रिषु कोणेषु संशृणु ॥ २७ ॥
वामवामेतराग्रेषु क्रमेण त्रितयं यजेत् ।
जम्भिनी स्तम्भिनी चैव मोहिनी सर्वसिद्धये ॥ २८ ॥
अन्धिन्याद्यास्तु देवेशि स्तम्भिन्यन्तान् प्रपूजयेत् ।
पञ्चकोणे महादेवि पुर आदिक्रमेण तु ॥ २९ ॥
मनुस्थाने च तद्वाह्ये ततो मात्रार्चनं भवेत् ।
षडारे पुर आरभ्य प्रादक्षिण्येन पूजयेत् ॥ ३० ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी प्रिये ।
माहेन्द्री चैव चामुण्डा डाकिन्याद्यर्चनं[1] शृणु ॥ ३१ ॥
डाकिनी शाकिनी चैव लाकिनी काकिनी तथा ।
साकिनी हाकिनी चैव ततः षट्कोणके यजेत् ॥ ३२ ॥
षट्कोणपार्श्वयोः पूज्ये देव्यौ सर्वार्थसिद्धिदे ।
हलं कपालं दधतीं क्रोधिनीं वामतो यजेत् ॥ ३३ ॥
मुसलेषुकरां देवीं स्तम्भिनीं दक्षिणे यजेत् ।
चण्डोच्चण्डं महेशानि षट्कोणे पुरतो यजेत् ॥ ३४ ॥

---

(१) 'डाकिन्याद्यास्ततः शृणु' इति पा० ।

नागं कपालं डमरुं त्रिशूलं दधतं प्रिये ।
नग्नं नीलजटाराजन्मस्तकं पञ्चमीसुतम् ॥ ३५ ॥
ततोऽष्टदलपत्रेषु वार्ताल्याद्यष्टकं यजेत् ।
शृणु त्वमेव तस्याग्रे पूजयेन्महिषाष्टकम् ॥३६॥
शृङ्गोद्यतं रक्तनेत्रं कुक्षिचक्रानिकृन्तनम् ।
नीलजीमूतसङ्काशं रिपुभूपातनक्षमम् ॥ ३७ ॥
शतपत्रं क्रमात्पूज्यं रुद्रार्कवसुदस्रकैः ।
त्रयस्त्रिंशद्दलगतैस्त्रितारोच्चरितैः पृथक् ॥३८॥
अवशिष्टे दले पूज्याः[1] स्तंभिनी जृम्भिनीयुताः ।
शताराग्रे महेशानि महासिंहं समर्चयेत् ॥ ३९ ॥
सहस्रपत्रे सम्पूज्यं वाराहीणां सहस्रकम् ।
अङ्कुशान्ते महादेवि वाराह्यै नम आलिखेत् ॥ ४० ॥
अनेन मनुना देवि पूजयेत्तु सहस्रधा ।
भूबिम्बे बटुकक्षेत्रयोगिनीगणपान्यजेत् ॥ ४१ ॥
पुनर्देवीं समाराध्य गन्धपुष्पादितर्पणैः ।
अक्षमाला हरिद्राया मुख्यस्तम्भनकारिणी ॥ ४२ ॥
स्फाटिकी चाथ पद्माक्षरुद्राक्षादिसमुद्भवा ।

इति दक्षिणा मूर्तिसंहितायां पञ्चमीक्रमार्चनविधिः सप्तत्रिंशः पटलः ॥ ३७ ॥

---

( १ ) 'योज्याः' इतिपा० ।

# अथ अष्टत्रिंशः पटलः ।

ईश्वर उवाच—

अथातः सम्प्रवक्ष्यामि तर्पणं भुवि दुर्लभम् ।
तिलमैरेयबन्धूककुसुमैस्तर्पयेत्क्रमात् ॥ १ ॥
मनोहरे सुवर्णादिपात्रे सम्पूज्य पूर्ववत् ।
अनेन विधिना देवि प्रियो भवति निश्चयात् ॥ २ ॥
एतस्या एव विद्यायाः कुण्डे च परमेश्वरी ।
विशेषः कथ्यते सोऽत्र सर्ववैरिनिकृन्तनः ॥ ३ ॥
एकहस्तमितं कुण्डमधोहस्तेन विस्तृतम् ।
हस्तखातं मनोरम्यं होमोऽप्यत्र निगद्यते ॥ ४ ॥
स्तम्भने शिवदिग्भागे निग्रहे यमादिग्भवेत् ।
अस्मिन् कुण्डे महेशानि भैरवाग्निं प्रपूजयेत् ॥ ५ ॥
लौकिकं वाऽर्चयेन्मन्त्री वक्ष्यमाणैः परेश्वरि ।
हृदयं भुवनेशान्या भुवनेशीं च संलिखेत् ॥ ६ ॥
तस्या एव शिखां देवि बीजत्रयमिदं प्रिये ।
उक्त्वा भैरवमुच्चार्य चतुर्थ्यन्ते नमो लिखेत् ॥ ७ ॥
इत्यग्निपूजनं कृत्वा ततोऽग्नेराहुतिं त्यजेत् ।
पूर्वबीजत्रयं चैव त्वाग्नेये दिशि चालिखेत् ॥ ८ ॥

---

(१) पूर्वबीजत्रयं भैरवाग्नेयद्विठमालिखेत् । इतिपा० ।

अनेनैकाहुतिं दत्वा नीलोत्पलशुचानले ।
नीलोत्पलैर्भैरवाग्निं तापिच्छैरपि वा यजेत् ॥ ९ ॥
तापिच्छैः स्तम्भने होमो विज्ञेयस्तु चतुःशतम् ।
देवदारुतिलैर्लाक्षाहरिद्राभिस्तथा भवेत् ॥ १० ॥
त्रिसप्तमध्यरात्रेषु प्रत्येकं साष्टकं शतम् ।
हरिणीमुद्रया होमः कथितस्तव सुन्दरि ॥ ११ ॥
दक्षिणे होमकुण्डस्य हस्तमात्रान्तिलान्प्रिये ।
प्रसार्य भाण्डे स्वर्णादि मृज्जे वा लोहसम्भवे ॥१२॥
कृष्णशाटीं परिक्षिप्य फुल्लापिच्छप्रपुष्पिणीम् ।
तिलमिश्रैरम्बुभिस्तं पूरयेन्मनुवित्तमः ॥ १३ ॥
वाग्भवं धरणीमुक्ता कर्षणादिहलाय च ।
नवाक्षरमिदं चोक्त्वा हृदन्तं मन्त्रमालिखेत् ।
अङ्कुशं क्रोधिने देवि मुसलाय नमो लिखेत् ॥१४॥
सप्तविंशतिकृत्वस्तु देवीमन्त्रं समुच्चरेत् ।
घटं स्पृष्ट्वा हृदि ध्यात्वा पञ्चमीं परमेश्वरीम् ॥ १५ ॥
तद्घटस्थोदकैः शत्रुमभिषिंचेद्विचक्षणः ॥ १६ ॥
कफान्वितः क्षयी वैरी वश्यो भवति निश्चयात् ।
अथ वाऽन्यं हि होमस्य विधिं वक्ष्ये शृणु प्रिये ॥१७॥
खरमेषाङ्गरक्तेन लाजाचूर्णैस्तिलैः सह ।
मिश्रं पिण्डं तु पिण्डेन मेलयेद्धेतुना प्रिये ॥ १८ ॥

पिशितैर्गन्धपुष्पादिधूपदीपैश्च साधकः ।
तर्पयेद्योगिनीपिण्डं परमानन्दसुन्दरम् ॥ १९ ॥
सपद्मे वेश्म सङ्कल्प्य[1] मृदा वा लोहकेन वा ।
निवेश्य कुण्डे वक्रे वा हुनेल्लाजारजःकणैः ॥ २० ॥
अयुतं सञ्जपन्देवि त्रिसप्त क्षणदा हुनेत् ।
त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि वैरिणः ॥ २१ ॥
योगिनीनां मुखे देवि पतन्त्यत्र न संशयः ।
अथाऽतः सम्प्रवक्ष्यामि साधकानन्दकारणम् ॥ २२ ॥
प्रणवं प्रणवेनैव सम्पुटीकृत्य योजयेत् ।
औम्यामौम्यां च साध्याख्यां ठकारेण च वेष्टयेत् ॥२३॥
अष्टभिः कुलिशैर्भित्वा ग्लौंक्षौमिति[2] पदान्तरे ।
कुलिशाग्रे तारबीजं पार्थिवं मण्डलं ततः ॥ २४ ॥
[3]रुद्रस्वरे समारोप्य पीतपुष्पैः समर्चयेत् ।
पञ्चमी शार्टकं[4] यन्त्रं त्रिषु लोकेषु दुर्लभम् ॥ २५ ॥
[5]सहस्रसङ्ख्याजप्तेन विषभाण्डे क्षिपेद् बुधः ।

---

( १ ) 'सम्बाल्य' इति पाठः ।

( २ ) 'ज्लौंक्षौं औमिति तदन्तरे' इतिपाठः ।

( ३ ) कुलिशाङ्के लिखेन्नाम बाह्ये विद्यां समालिखेत् । बहिरङ्कुश-सम्विद्धं सर्वमेतद्वरानने ॥ इत्यधिकः पा० ।

( ४ ) 'शकटं' इतिपा० ।

( ५ ) 'सहस्रसंख्यया जप्तं निशां भाण्डे क्षिपेद् बुधः । वसेद्रात्रौ भूर्जपत्रे लिखित्वा स्थापयेत्सुधीः । इतिपा० ।

श्यामलोहितमन्त्रज्ञो रक्तपुष्पैः समर्चयेत् ॥ २६ ॥
प्रेतधूमानले क्षिप्त्वा यजेद् गुरुविधानतः ।
सौवर्णं राजतं ताम्रं क्रमेणैतत्समर्चयेत् ॥ २७ ॥
कण्टकानि[1] हरिद्राभैः पुष्पैराराधयेच्छिवाम् ।
धान्यराशौ च सायाह्ने विनिक्षिप्य च तद्भवेत् ॥२८॥
नूतने कुम्भकारस्य खर्परे यन्त्रमालिखेत् ।
अञ्जनाभैः समभ्यर्च्य कुसुमैः पथि देशिकः ॥ २९ ॥
उच्चाटयेत्तथा शीघ्रं कोट्यब्जं सुस्थिरं रिपुम् ।
तद्भाण्डं तु सतीद्रव्यैः भिन्नभिन्नाञ्जनप्रभैः[2] ॥ ३० ॥
[3]नश्यन्ति दृष्टयस्तेषां शत्रूणां नान्यथा भवेत् ।
हरिद्रया शिलामध्ये समालिख्याऽर्चयेत्सुधीः ॥३१॥
पीतपुष्पेषु तद्यन्त्रमधोवक्त्रं विनिःक्षिपेत् ।
वाक्स्तम्भो जायते शीघ्रं वादिनां परमेश्वरि ॥३२॥
अथ सीसे समालिख्य सीसाभैः कुसुमैर्यजेत् ।
शिलाधःस्ताद्विनिःक्षिप्य व्यवहारे जयी भवेत् ॥३३॥

---

( १ ) 'कटकार्थी' इतिपा० ।
( २ ) 'भिन्नभिन्नाञ्जनंप्रिये' इतिपा० ।
( ३ ) निःसाणे पटहे वाद्ये विलिखेन्मनुवित्तमः ।
युद्धे तद्ध्वनिमाकर्ण्य पलायन्ते महाबलाः ॥
समुद्धृत्य समभ्यर्च्य लोहकारगृहे क्षिपेत् ।
वध्यमानो रोगजालैर्मरणं प्राप्नुयाद्रिपुः ॥
धूमाभिन्नौ समालिख्य धूमाभैरर्चयेत्प्रिये । इत्यधिकःपाठः ।

सर्वलोहमये पत्रे सितपुष्पैः समर्चयेत् ।
वाक्पतिर्जायते मन्त्री पञ्चसारेऽथ संलिखेत् ॥३४॥
पञ्चवर्णैः प्रसूनैश्च पूजयेत्सर्वकर्मकृत् ।
अथातस्तिमिरामिश्रैः सीसयुग्मे लिखेद् बुधः ॥ ३५ ॥
अभ्यर्च्य कुसुमै रम्यैः प्रेतभूमौ प्रतापयेत् ।
तेनाकृष्टिर्भवेदाशु रिपूणां योषितामपि ॥ ३६ ॥
वृक्षगर्भे न्यसेच्चक्रं सीसपात्रे सुरञ्जितम् ।
बहिः स्वग्रामभागेभ्यः सम्प्रविष्टा[2] भवन्ति हि ॥ ३७ ॥
[3]साध्यनक्षत्रवृक्षस्य गर्भे चक्रं प्रविन्यसेत् ।
रोगदम्भस्य निक्षिप्तं हितदं भूमिदं प्रिये ॥ ३८ ॥
अनङ्गं[4] कामिनीं दद्यात्कुम्भे क्षिप्ते धनप्रदम्[5] ।
पूर्वस्यां दिशि सङ्क्षिप्तं रिपूणां भयदं भवेत् ॥ ३९ ॥
आग्नेयमग्निदिग्भागे वैरिणां मृत्युदं भवेत् ।
तथा नैर्ऋत्यदिग्भागे शत्रून्मादनकारणम् ॥ ४० ॥
पश्चिमे रोगदं तेषां भीतिदं वायुदिग्गतम् ।
धनदं चोत्तरं भागे साधकस्य न संशयः ॥ ४१ ॥
ईशानगं भ्रान्तिकरं वैरिणां परमेश्वरि ।

---

( १ ) 'पुंसां वा' इतिपा० ।
( २ ) 'सम्प्रतिष्ठा' इतिपा० ।
( ३ ) 'साध्यवृक्षस्य गर्भे च सन्निवेश्य प्रविन्यसेत्' इतिपा० ।
( ४ ) 'अन्नगं' इतिपा० ।
( ५ ) 'सुत' इतिपा० ।

मध्यगं सर्वकार्याणि शत्रूणां नाशयेत् ध्रुवम् ॥ ४२ ॥
एतस्या एव विद्याया मध्यरात्रेऽर्चनं भवेत् ।
अन्यथा देवताशापो जायतेऽतीव दुस्तरः ॥ ४३ ॥

इति दक्षिणामूर्तिसंहितायां पञ्चमीशकटयन्त्रोद्धार-
प्रयोगसाधनविधिरष्टत्रिंशःपटलः ॥ ३८ ॥

---

## अथोनचत्वारिंशःपटलः ।

ईश्वर उवाच—

पञ्चरात्रे महातन्त्रे कथिता वैष्णवागमे ।
एनामाराध्य देवेशि पालकोऽभूज्जगत्त्रये ॥ १ ॥
विद्याकदम्बचक्रस्था शिवविद्या मयेरिता ।
ताः सन्ति नव देवेशि तस्माच्छिवमयी शिवा ॥ २ ॥
सिद्धिरत्नमहातन्त्रे कथितो गणपागमः ।
सप्तकोटिमहातन्त्रैर्मण्डितस्तन्मयी शिवा ॥ ३ ॥
वामदेवमहातन्त्रे सौरज्ञानप्रकाशकः ।
मनसस्तन्मयी देवी ज्ञानशक्तिरितीरिता ॥ ४ ॥
अतः संसेव्यते देवी चतुरायतनैः सदा ।

सिंहासनप्रसङ्गेन चतुरन्वयदेवता ॥ ५ ॥
कथिता परमेशानि सम्पदेषां न संशयः ।
यस्याःस्मरणमात्रेण पलायन्ते महापदः ॥ ६ ॥

इति दक्षिणामूर्तिसंहितायामायताम्नायविवरणं नामैकोनचत्वारिंशःपटलः ॥३९॥

---

## अथ चत्वारिंशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि नित्याविवरणं क्रमात् ।
कामेश्वरीमहाभेदा बहवः सन्ति पार्वति ॥ १ ॥
तत्र कामेश्वरी विद्या कथ्यते भुवि दुर्लभा ।
त्रिपुरेशीं समुच्चार्य त्रितारान्ते तु हृत्ततः ॥ २ ॥
कामेश्वरीपदं चोक्त्वा इच्छाकामफलप्रदे ।
सर्वसत्ववशं प्रोक्त्वा करि सर्वजगत्पदम् ॥ ३ ॥
क्षोभान्ते तु करी हूँ हूँ बाणांश्च त्रिपुरेश्वरी ।
विपरीतां समालिख्य विद्यां षट्त्रिंशदक्षरीम् ॥ ४ ॥
आद्यभागत्रयेणैव द्विरावृत्त्या षडङ्गकम् ।

कामेश्वरीव ऋष्यादिध्यानयन्त्रार्चनादिकम् ॥ ५ ॥

इति दक्षिणामूर्तिसंहितायां कामेश्वरीनित्याविद्या
विवरणं नाम चत्वारिंशः पटलः ॥ ४० ॥

---

## अथैकचत्वारिंशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि विद्यां श्रीभगमालिनीम् ।
वाग्भवं भगशब्दान्ते भुगे वाग्भवमेव च ॥ १ ॥
भगिन्यन्ते वाग्भवं च भगोदरि च वाग्भवम् ।
भगमाले वाग्भवं च वाग्भवादौ भगावहे ॥ २ ॥
भगगुह्ये वाग्भवं च भगयोनि च वाग्भवम् ।
भगिन्यन्ते पातनीति वाग्भवं भगसर्वच ॥ ३ ॥
आदिवाग्भवमालिख्य ततो भगवशङ्करि ।
वाग्भवं भगरूपे तत् भगानित्ये च वाग्भवम् ॥ ४ ॥
भगक्लिन्ने वाग्भवं च भगस्यान्ते समालिखेत् ।
रूपे सर्वभगानीति मे ह्यानय च वाग्भवम् ॥ ५ ॥
वाग्भवादौ भगवति भगवान्ते वदे च वाक् ।

भगरेते वाग्भवं च भगेति च समालिखेत् ॥ ६ ॥
रेते वाग्भवमालिख्य भगक्लिन्ने च वाग्भवम् ।
भगक्लिन्नद्रवे चान्ते भगं क्लेदय चालिखेत् ॥७॥
भगं द्रावय चालिख्य भगामोघे भगेति च ।
विच्चे भगं क्षोभयेति सर्वसत्वान्भगेश्वरी ॥ ८ ॥
वाग्भवं च भगं चैव वाग्भवं भगभें लिखेत् ।
वाग्भवं च भगक्लीं च वाग्भवं भगमालिखेत् ॥ ९ ॥
वाग्भवं च भगं चैव वाग्भवं भगमों लिखेत् ।
वाग्भवं च भगब्लूं च वाग्भवं भगमालिखेत् ॥१०॥
वाग्भवं च भगब्लूं च वाग्भवं भगमोंलिखेत् ।
भगक्लिन्ने च सर्वाणि भगान्यथ च मे लिखेत् ॥११॥
वशमानय चालिख्य भगपञ्चकमन्मथम् ।
भगान्तरे भगान्ते च हरब्लेमात्मकं लिखेत् ॥ १२ ॥
भगान्ते पञ्चमं कामं ततो वै भगमालिनीम् ।
ङेन्तामुच्चार्य विज्ञेयं त्रैलोक्य वश कारिणी ॥१३॥
चतुराधिकविंशत्या द्विशतेन च मण्डिता ।
वर्णानां भगमालेयं नित्या सकलसिद्धिदा ॥ १४ ॥
ऋषिरस्यास्तु सुभगो गायत्री छन्द उच्यते ।
देवतेयं तु बीजं तु हरब्लेमात्मकं प्रिये ॥ १५ ॥
शक्तिः स्त्रीबीजकं ब्लूं तु कीलकं परमेश्वरी ।

षड्दीर्घस्वरभेदेन न्यसेदङ्गानि देशिकः ॥ १६ ॥
कामन्यासं तथा बाणन्यासं कुर्यात्तु पूर्ववत् ।
कदम्बवनमध्यस्थामुद्यत्सूर्य्यसमद्युतिम् ॥१७॥
नानाभूषणसम्पन्नां त्रैलोक्याकर्षणक्षमाम् ।
पाशाङ्कुशौ पुस्तकं च तौलिकां नखलेखनीम् ॥१८॥
वरदं चाभयं चैव दधतीं विश्वमातरम् ।
एवं ध्यात्वा ततो लक्षं मिताहारो जपेन्नरः ॥१९॥
तद्दशांशेन बन्धूकैस्त्रिमध्वक्तैर्हुनेच्छुचिः ।
त्रिकोणं चैव षट्कोणं ततः षोडशपत्रकम् ॥२०॥
ततोऽष्टपत्रं भूबिम्बमेवं मण्डलमालिखेत् ।
मध्ये देवीं समभ्यर्च्य ततोऽङ्गावरणं यजेत् ॥ २१ ॥
विद्यादिशक्तित्रितयं त्रिकोणेषु प्रपूजयेत् ।
क्रमेण चाग्रमारभ्य पुनस्तेषु समर्च्चयेत् ॥ २२ ॥
सुभगां च भगां चैव तथा च भगसर्पिणीम् ।
बाणांश्च देवि तत्रैव पूर्ववत्पूजयेत्सुधीः ॥ २३ ॥
भगमालादिषट्कं च कोणचक्रेषु पूजयेत् ।
वशंकरीं च रूपीं च नित्यक्लिन्नां च रूपिणीम् ॥२४॥
तथा भगवतीं चैव वरदां परमेश्वरीम् ।
रेतां सुरेतां क्लिन्नां च तथा क्लिन्नद्रवामपि ॥ २५ ॥

( १ ) 'मौलिस्थीगतलेखनीम्' इति पा० ।

अमोघां चैव विद्यां च तथेशीं क्लिन्नदेवताम् ।
एताः षोडश देवेशि भगवाक्[1]येन योजयेत् ।
अष्टपत्रेषु देव्यस्तु मातरः परमेश्वरि ।
इन्द्रादयस्तु भूबिम्बे पुनर्देवीं समर्च्चयेत् ॥ २७ ॥

इति दक्षिणामूर्तिसंहितायां भगमालिनीनित्याविधिरेकचत्वारिंशः पटलः ॥ ४१ ॥

## अथ द्विचत्वारिंशः पटलः ।

ईश्वर उवाच—

भुवनेशीं समुच्चार्य्य नित्यक्लिन्ने मदद्रवे ।
वह्निजाया च विद्येयं रुद्रवर्णा महोत्कटा ॥ १ ॥
ऋषिर्ब्रह्मा समुद्दिष्टो विराट् छन्द उदीरितम् ।
नित्यक्लिन्ना देवतोक्ता वनिताद्राविणी परा ॥ २ ॥
बीजं माया वह्निजाया शक्तिः क्लीं कीलकं मतम् ।
एकेन च तथा द्वाभ्यां द्वाभ्यां द्वाभ्यां क्रमात् प्रिये ॥३॥
द्वाभ्यां द्वाभ्यां षडङ्गानि बिन्यसेद्देशिकोत्तमः ।

(१) 'भगशब्देन' इति पा० ।

रक्तां रक्ताङ्गवसनां चन्द्रचूडां त्रिलोचनाम् ॥ ४ ॥
स्विद्यद्वक्त्रां मदाघूर्णलोचनां रत्नभूषिताम् ।
पाशाङ्कुशौ कपालं च महाभीतिहरं तथा ॥ ५ ॥
दधतीं संस्मरेन्नित्यां पद्मासनविराजिताम् ।
वर्णलक्षं जपेन्मन्त्रं तद्दशांशेन होमयेत् ॥ ६ ॥
तिलैस्त्रिमधुसंयुक्तैः पुरश्चारी भवेद् बुधः ।
मधूकपुष्पैर्वा होमो हविषा वाऽथ नीरजैः ॥ ७ ॥
त्रिकोणं चाष्टपत्रं च ततो भूबिम्बमालिखेत् ।
आदौ देवीं समभ्यर्च्य ततोऽङ्गावरणं यजेत् ॥ ८ ॥
त्रिकोणे पूजयेद्देवीं नित्यक्लिन्नां मदद्रवाम् ।
मातरो दलमूलेषु दलमध्येषु पूजयेत् ॥ ९ ॥
नित्यां निरञ्जनां क्लिन्नां क्लेदिनीं मदनातुराम् ।
मदद्रवां द्राविणीं च क्षोभिणीं च प्रपूजयेत् ॥ १० ॥
भूबिम्बे लोकपालाः स्युः पुनर्देवीं समर्च्चयेत् ।
इति नित्या तृतीयेयं भोगमोक्षफलप्रदा ॥ ११ ॥
कथिता देवदेवेशि त्रैलोक्यवशकारिणी ।

इति श्रीदक्षिणामूर्तिसंहितायां नित्यक्लिन्नानित्याविधि-
र्द्विचत्वारिंशः पटलः ॥ ४२ ॥

---

( १ ) 'भवेत् प्रिये' इति पा० ।

## अथ त्रिचत्वारिंशः पटलः ।

अथ वक्ष्ये महेशानि भेरुण्डां परमेश्वरीम्[1] ।
ततो[2] भ्रोङ्कारमुच्चार्य्याङ्कुशाभ्यां च सुवेष्टितम् ॥ १ ॥
अन्त्यहीनं चवर्गं तु चतुर्द्धा रेफमण्डितम् ।
अनुग्रहेन्दुबिन्द्वाढ्यं तारः स्वाहोदरस्थितिः ॥ २ ॥
मनुर्द्दशार्णो देवेशि महाविषहरो भवेत् ।
ऋषिरस्या महाविष्णुर्गायत्री छन्द उच्यते ॥ ३ ॥
देवतेय परा शक्तिस्तृतीयं बीजमुच्यते ।
वह्निजाया तु शक्तिः स्यात्कीलकं सृणिरेव च ॥ ४ ॥
षड्दीर्घस्वरभेदेन बीजेनैव षडङ्गकम् ।
चन्द्रकोटिप्रतीकाशां स्रवन्तीममृतद्रवैः ॥ ५ ॥
नीलकण्ठीं त्रिनेत्रां च नानाभरणभूषिताम् ।
इन्द्रनीलस्फुरत्कान्ति शिखिवाहनशोभिताम् ॥ ६ ॥
पाशाङ्कुशौ कपालं च छुरिकां वरदाभयौ ।
बिभ्रतीं हेमसम्बद्धगरुडोद्गारभूषिताम् ॥ ७ ॥
एवं ध्यात्वा जपेद्वर्णलक्षं तु विजितेन्द्रियः ।
तद्दशांशेन जुहुयात् श्वेतपद्मैः परेश्वरीम् ॥ ८ ॥

---

(१) 'परमेश्वरि' इति पा० ।
(२) 'भ्रोंकारं समुच्चार्या०' इति पा० ।

त्रिकोणं चाष्टपत्रं च ततो भूबिम्बमालिखेत् ।
मध्ये प्रणवबीजेन त्रिकोणस्य च पार्श्वयोः ॥ ९ ॥
सृणिद्वयं त्रिकोणेषु पञ्चमादित्रयं न्यसेत् ।
अवशिष्टं त्रिकोणाग्रे कोट्यग्रेषु च संलिखेत् ॥ १० ॥
मात्रामन्त्रक्रमेणैव वसुपत्रेषु चालिखेत् ।
वस्वक्षरविभागेन चतुःषष्ट्यर्णविग्रहाम् ॥ ११ ॥
भेरुण्डां संलिखेन्मन्त्री महाविषहरां प्रिये ।
भुवनेशीं समुच्चार्य ततस्त्रिभुवनेति च ॥ १२ ॥
विद्ये[1] नमः सिद्धजिते सर्वलोकप्रपूजिते ।
भ्रम भ्रम महामोहे द्विधा हूमात्मकं लिखेत् ॥ १३ ॥
विच्चेयुगं कुले कौले कुसुमाले ततः परम् ।
भेरुण्डे[2] शिखि चालिख्य वाहिनीति ततः परम् ॥१४॥
नीलकण्ठे च रौद्रे च ततो वेतालि सोम च ।
मातृके भुवनेशीं च चतुःषष्ट्यर्णविग्रहाः ॥ १५॥
छन्दोऽनुष्टुब् ऋषिर्ब्रह्मा बीजं तु भुवनेश्वरी ।
भेरुण्डा देवता ज्ञेया पुरुषार्थप्रदायिनी ॥ १६ ॥
षड्दीर्घस्वरभेदेन बीजेनैव षडङ्गकम् ।
ध्यानं तु पूर्ववद्देवीपूजाद्वन्द्वे समाचरेत्[3] ॥ १७ ॥

---

( १ ) 'विद्येनमस्ततः सिद्धेत्वजितेलोकपूजिते' । इति पा० ।
( २ ) इदमर्द्धं 'ख' पुस्तके नास्ति० ।
( ३ ) 'समालिखेत्' इति पा० ।

महीबिम्बे मातृकाया वर्णा लेख्याः क्रमेण तु ।
तत्रावाह्य महेशानीमुपचारैः समर्च्चयेत् ॥ १८ ॥
अङ्गानां पूर्ववत्पूजां त्रिकोणेषु ततः शृणु ।
शिखिनीं नलिकण्ठं च रौद्रीं चैव क्रमाद्यजेत् ॥२०॥
त्रिकोणपार्श्वयोः पूज्ये वेताली सोममातृका ।
ततस्त्रिभुवनेशानीं सिद्धां चैवा[1]पराजिताम् ॥ २० ॥
लोकपूज्यां महामोहां कुलां कौलां तथैव च ।
[2]कुसुमाष्टकपत्रेषु पुर आरभ्य पूजयेत् ॥ २१ ॥
ततश्च मातरः पूज्या वसुपत्रेषु मन्त्रवि[3]त् ।
इन्द्रादयस्तु भूबिम्बे पुनर्देवीं समर्च्चयेत ॥ २२ ॥

इति श्रीदक्षिणामूर्तिसंहितायां भेरुण्डानित्यायजनविधि-
स्त्रिचत्वारिंशः पटलः ॥ ४३ ॥

---

( १ ) 'सिद्धचैवाजितामपि' इति पा० ।
( २ ) 'कुशलामष्टपत्रेषु पुरआदिप्रपूजयेत्' इति पा० ।
( ३ ) 'सुन्दरि' इति पा० ।

## अथ चतुश्चत्वारिंशः पटलः ।

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि नित्यां वै वह्निवासिनीम् ।
परां विलिख्य वन्ह्यन्ते वासिन्यै नम इत्यपि ॥ १ ॥
अष्टार्णोऽयं महेशानि पुरुषार्थप्रदो मनुः ।
ऋषिरस्य वसिष्ठः स्यात् गायत्री छन्द उच्यते ॥२॥
आद्यन्ते बीजशक्ती स्यात् कीलकं मध्य एव च ।
देवीपदत्रयेणैव द्विरावृत्त्याङ्गमेव च[1] ॥ ३ ॥
पदत्रयं देहभागत्रये विन्यस्य देशिकः ।
ध्यायेत्तप्तसुवर्णाभां नानालङ्कारभूषिताम् ॥ ४ ॥
पाशाकुंशौ स्वस्तिकं च शक्तिं च वरदाभयौ ।
दधतीं रत्नमुकुटां त्रैलोक्यतिमिरापहाम् ॥ ५ ॥
वर्णलक्षं जपेन्मन्त्रं तद्दशांशेन होमयेत् ।
घृतान्नेन वरारोहे ततः सिद्धो भवेन्मनुः ॥ ६ ॥
अष्टपत्रं लिखेत्पद्मं विद्यां प्रतिदले लिखेत् ।
एकैकाक्षरभेदेन ततो भूबिम्बमालिखेत् ॥ ७ ॥
मध्ये पीठं समभ्यर्च्य दिक्षु मध्ये च पार्वती ।
पीता श्वेताऽरुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ॥८॥

---

(१) 'द्विरावृत्त्याङ्गकं न्यसेत्' इति पा० ।

आतुरा ज्वालिनी चैव ततः सिंहासनं यजेत् ।
देवीमावाहयेत्तत्र उपचारैः समर्चयेत् ॥ ९ ॥
आदावङ्गानि सम्पूज्य वसुपत्रेषु पूजयेत् ।
जातवेदाः सप्तजिह्वा हव्यवाहन एव च ॥ १० ॥
अश्वोदरभवश्चैव तथा वैश्वानरः प्रिये ।
कौमारतेजा देवेशि तथा विश्वमुखः क्रमात् ॥११॥
ततो देवमुखो देवी वसुपत्रेषु पूजयेत् ।
ब्राह्म्यादयस्तु सम्पूज्या वसुपत्रेषु देशिकः ॥ १२ ॥
इन्द्रादयस्तु भूबिम्बे पुनर्देवीं समर्चयेत् ।
साक्षाद्वह्निमहापीठकलादशकमण्डिताम् ॥ १३ ॥

इति श्रीदक्षिणामूर्तिसंहितायां वह्निवासिनीनित्याविधि-
श्चतुश्चत्वारिंशः पटलः ॥ ४४ ॥

## अथ पञ्चचत्वारिंशः पटलः ।

अथ वक्ष्ये महादेवि महाविद्येश्वरीं पराम् ।
नित्यक्लिन्नां समालिख्य मुखे तारं समालिखेत् ॥१॥
हृल्लेखान्ते फरेमात्मचन्द्रबीजं विसर्गवान् ।

चतुर्दशाक्षरी विद्या ऋषिर्ब्रह्मा निगद्यते ॥ २ ॥
गायत्रं छन्द आख्यातं देवता परमेश्वरी ।
आद्यन्ते बीजशक्ती तु हृल्लेखा कीलकं भवेत् ॥३॥
चतुष्केण च युग्मेन युग्मेन युगलेन च ।
युगलेन च युग्मेन न्यसेदङ्गानि देशिकः ॥ ४ ॥
जपाकुसुमसङ्काशां रक्तांशुकविराजिताम् ।
माणिक्यभूषणां नित्यां नानाभूषणभूषिताम् ॥ ५ ॥
पाशाङ्कुशौ कपाल[1]ं च सुधापानविघूर्णिताम् ।
अभयं दधतीं ध्यात्वा चतुर्ल्लक्षं जपेत्सुधीः ॥ ६ ॥
[2]दशांशे जुहुयाद्वह्नौ विशिष्टैस्तिलतंदुलैः ।
त्रिकोणं वेदपत्रं च वसुपत्रं च भूगृहम् ॥ ७ ॥
एवं मण्डलमालिख्य मध्ये देवीं समर्च्चयेत् ।
आदावङ्गानि सम्पूज्य त्रिकोणेषु प्रपूजयेत् ॥ ८ ॥
ब्रह्माणी वैष्णवी रौद्री ततो ब[3]ाह्यास्त्रपूजनम् ।
वेदमाता च हृल्लेखा योगिनी चन्द्रशेखरा ॥ ९ ॥
पुरआदिक्रमेणैव वेदास्त्रेषु प्रपूजयेत् ।

---

( १ ) 'कपालस्थ' इति पा० ।
( २ ) 'तद्दशांशेन जुहुयाद्धविषा तिलतण्डुलैः' इति पा० ।
( ३ ) 'वेदास्त्रपूजनम्' इति पा० ।

नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा ॥१०॥
मदद्रवा द्राविणी च क्षोभिणी वस्वरेऽर्चयेत् ।
मातरश्चैव सम्पूज्या भूबिम्बे लोकपालकाः ॥ ११ ॥

इति श्रीदाक्षिणामूर्तिसंहितायां महाविद्येश्वरीविधिः
पञ्चचत्वारिंशः पटलः ॥ ४५ ॥

## अथ षट्चत्वारिंशः पटलः ॥

ईश्वर उवाच--

अथ दूतीं प्रवक्ष्यामि त्रैलोक्याकर्षणक्षमाम् ।
भुवनेशीं समुच्चार्य शिवदूत्यै नमो लिखेत् ॥ १ ॥
सप्तार्णा शिवदूतीयं त्रैलोक्यस्वामिनी प्रिये ।
ऋषी रुद्रस्तु गायत्री छन्दोऽस्या देवता शिवा ॥ २ ॥
आद्यन्ते बीजशक्ती च मध्यं कीलकमुच्यते ।
विद्याभागत्रयेणैव द्विरावृत्याऽङ्गकं न्यसेत् ॥ ३ ॥
दूर्वानिभा त्रिनेत्रा च महासिंहसमासना ।
शङ्खारिचापबाणांश्च सृणिपाशौ वराभये ॥ ४ ॥
दधतीं चिन्तयेन्नित्यां सप्तलक्षं जपेत्ततः ।

तद्दशांशेन जुहुयात्तिलैर्घृतमधुप्लुतैः ॥ ५ ॥
अष्टपत्रं लिखेत्पद्मं बहिर्भूबिम्बमालिखेत् ।
तत्र देवीं समभ्यर्च्य उपचारैः समर्चयेत् ॥ ६ ॥
आदावङ्गानि सम्पूज्य वसुपत्रेषु पूजयेत् ।
जया च विजया चैव कीर्तिः प्रीतिः प्रभा तथा ॥७॥
श्रद्धा मेधा धृतिश्चाष्टौ भूबिम्बे च दिगीश्वराः ।
पुनर्देवीं समभ्यर्च्य सुखी भूयान्नरोत्तमः ॥ ८ ॥

इति श्रीदक्षिणामूर्तिसंहितायां शिवदूतीनित्याविधिः
षट्चत्वारिंशः पटलः ॥ ४६ ॥

## अथ सप्तचत्वारिंशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि त्वरितां सिद्धिदायिनीम् ।
तारं परा च कूर्च्चं च खेचच्छेक्षः समालिखेत् ॥१॥
स्त्रीं हूमात्मकमुच्चार्य्य क्षें परामस्त्रकं लिखेत् ।
त्वरिता रविवर्णेयं भोगमोक्षफलप्रदा ॥ २ ॥

(१) 'तारं परान्ते कवचं' इति पा० ।

ऋषिरीशो विराट् छन्दो देवतेयं च पार्वति।
कवचं स्त्रीशक्तिबीजे कीलकं च प्रकीर्त्तितम् ॥ ३ ॥
चच्छेयुगं हृच्छिरस्तु छेक्षुयुग्मं शिखा ततः।
क्षस्त्रीयुगं च कवचं स्त्रींहूमात्मयुगं तथा ॥ ४ ॥
हूंक्षें नेत्राणि विन्यस्य क्षेंफडस्त्रं प्रकीर्त्तितम्।
श्यामाङ्गीं रक्तसत्पाणिचरणाम्बुजशोभिताम् ॥ ५ ॥
वृषलाहिसुमञ्जीरां कण्ठरत्नविभूषिताम्।
स्वर्णांशुकां स्वर्णभूषां वैश्याहिद्वन्द्वमेखलाम् ॥ ६ ॥
तनुमध्यां पीनवृत्तकुचयुग्मां वराभये।
दधतीं शिखिपिच्छानां वलयाङ्गदशोभिताम् ॥ ७ ॥
गुञ्जारुणां नृपाहीशकेयूरां रत्नभूषणाम्।
द्विजनागस्फुरत्कर्णभूषां मत्तारुणेक्षणाम् ॥ ८ ॥
नीलकुञ्चितधम्मिल्लवनपुष्पां कपालिनीम्[1]।
कैरातीं शिखिपत्राढ्यनिकेतनविराजिताम् ॥ ९ ॥
स्फुरत्सिंहासनप्रौढां स्मरेद्भयविनाशिनीम्।
रविलक्षं जपेन्मत्रं तद्दशांशेन होमयेत् ॥ १० ॥
मधुकपुष्पैर्देवेशि पुरश्चारी ततो भवेत्।
अष्टपत्रं लिखेत्पद्मं बहिर्भूबिम्बमालिखेत् ॥ ११ ॥
सर्वरक्षाकरं नाम चक्रमेतदुदाहृतम्।

---

(१) 'कलापिनीम्' इति पा०।

तत्रावाहय महेशानीमुपचारैः समर्च्चयेत ॥ १३ ॥
आदावङ्गानि सम्पूज्य वसुपत्रे प्रपूजयेत्[1] ।
हूंकारीं खेचरीं चण्डां छेदनीं क्षेपणीमपि ॥ १४ ॥
स्त्रियं हुंकारिणीं क्षेमकारिणीं क्रमतो यजेत् ।
श्रींबीजेनैव लोकानां लोकपालास्ततः परम् ॥ १५ ॥
अग्रे फट्कारिणी पूज्ज्या शरासनधरा प्रिये ।
स्वर्णरत्नमयी वेत्रयष्टिहस्ते सुभूषिते ॥ १६ ॥
द्वारपार्श्वयुगे पूज्ज्ये विजया च तथा जया ।
कृष्णो बर्बरकेशश्च लकुटेन विराजितः ॥ १७ ॥
किंकरः पुरतः पूज्ज्यस्तद्बहिः पूजयेत् क्रमात् ।
धातारं च विधातारं पुनर्देवीं समर्च्चयेत् ॥ १८ ॥
गन्धपुष्पादिनैवेद्यैर्महारक्षाकरीं यजेत ॥

इति दक्षिणामूर्तिसंहितायां त्वरितानित्याविधिः

सप्तचत्वारिंशः पटलः ॥ ४७ ॥

---

( १ ) 'वसुपत्रेषु योजयेत्' इति पा० ।

## अथ अष्टचत्वारिंशः पटलः ।

ईश्वर उवाच--

अथ वक्ष्ये महेशानि विद्यां श्रीकुलसुन्दरीम् ।
बालाख्या त्रिपुरेशानी पूर्वसिंहासने स्थिता ॥ १ ॥
ब्रह्मविष्णुमहेशाद्यैः पूज्ज्या श्रीकुलसुन्दरी ।
अथ वक्ष्ये परां नित्यां पुरुषार्थप्रदायिनीम् ॥ २ ॥
त्रिपुरेशीं समुच्चार्य्य नित्याख्यां भारतीं[1] तथा ।
हूंकारत्रितयं बाणा विद्येयं वासवाक्षरी[2] ॥ ३ ॥
अपरा पञ्चभिर्बाणैर्नित्या पञ्चाक्षरी भवेत् ।
त्रिपुरेशीव यन्त्रं तु ऋष्यादियजनं प्रिये ॥ ४ ॥

इति श्रीदक्षिणामूर्तिसंहितायां नित्याद्वयविधिः

अष्टचत्वारिंशः पटलः ॥ ४८ ॥

---

( १ ) "भैरवीं" इति पा० ।
( २ ) 'व स्साक्षरी' इति पा० ।

## अथोनपञ्चाशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि विद्यां नीलपताकिनीम् ।
तारहृत्पदमाभाष्य कामेश्वरि पदं ततः ॥ १ ॥
कामाङ्कुशे पदं चोक्त्वा ततः कामपताकिके ।
भगवत्यथ नीलांते पताके च भगान्तिके ॥ २ ॥
वतिहृन्मन्त्रमालिख्य ततोऽस्त्विति पदं लिखेत्[1] ।
परमान्ते तथा गुह्ये ह्रींकारात्रितयं लिखेत् ॥ ३ ॥
मदने मदनान्ते ऽथ देहे त्रैलोक्यमालिखेत् ।
परमान्ते वयेति तथा लेख्यं कवचास्त्राग्निवल्लभा ॥ ४ ॥
षष्ट्यर्णा परमेशानि देवी नीलपताकिनी ।
कामेश्वरीव यन्त्रं तु ध्यानमस्या निगद्यते ॥ ५ ॥
रक्तां रक्तांशुकप्रौढां तारवेदविभूषिताम्[2] ।
इन्द्रनीलस्फुरन्नीलपताकां कमले स्थिताम् ॥ ६ ॥
काचग्रैवेयसंलग्नसृणि च वरदाभये ।
दधतीं परमेशानीं त्रैलोक्याकर्षणक्षमाम् ॥ ७ ॥

---

( १ ) 'ततो स्त्विति च मे लिखेत् ' इति पा० ।
( २ ) 'नानारत्नविभूषिताम ' इति पा० ।

ध्यात्वा जपेच्चतुर्ल्लक्षं दशांशेन तिलैर्हुनेत् ।
एषा विद्या वरारोहे कामेशीव प्रपूजयेत् ॥ ८ ॥

इति श्रीदक्षिणामूर्तिसंहितायां नीलपताकाविधि-
रेकोनपञ्चाशः पटलः ॥ ४९ ॥

---

## अथ पञ्चाशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये परां विद्यां विजयां जयदां सदा ।
शिरश्चन्द्रखपान्ताग्निरुद्रस्वरविभूषिताम् ॥ १ ॥
बिन्दुनादकलाक्रान्तां विजयायै नमो लिखेत् ।
ऋषिरस्या अहं छन्दो गायत्रं देवता स्वयम् ॥ २ ॥
बीजं हृन्मध्यबाणास्तु बीजशक्ती तु कीलकम् ।
षड्दीर्घस्वरसंभिन्नबीजेनैव षडङ्गकम् ॥ ३ ॥
एकवक्त्रां दशभुजां सर्प्पयज्ञोपवीतिनीम् ।
द्रंष्ट्राकरालवदनां नरमालाविभूषिताम् ॥ ४ ॥
अस्थिचर्मावशेषां तां वह्निकूटसमप्रभाम् ।
व्याघ्रासनां महाप्रौढशवासनाविराजिताम् ॥ ५ ॥

रणे स्मरणमात्रेण भक्तेभ्यो विजयप्रदाम्।
शूलं सर्पचं टङ्कासिसृणिघण्टाशानिद्वयम्॥ ६॥
पाशमग्निमभीतिं च दधतीं जयदां सदा।
लक्षत्रयं जपेन्मन्त्रं तद्दशांशेन होमयेत्॥ ७॥
महापद्मैस्त्रिमध्वक्तै स्ततः सिद्धा भवेदियम्।
त्रिकोणं चैव षट्कोणं वसुपत्रं महीगृहम्॥ ८॥
मध्ये वीजं समालिख्य त्रिकोणेषु च वजिकम्।
षडक्षराणि षट्कोणे चतुःकोणेषु च स्वरान्॥ ९॥
युग्मयुग्मप्रभेदेन पत्राग्रेषु ततो लिखेत्।
नारसिंहं महाबीजं मातृकां वेष्टयेत्ततः॥ १०॥
अत्रावाह्य महादेवीमुपचारैः समर्च्चयेत्॥
आदै षडङ्गावरणं त्रिकोणे पूजयेत्ततः॥ ११॥
व्रह्मविष्णुमेहशांश्च षट्कोणेषु ततो यजेत्।
षड्योगिनीरष्टपत्रे मातरः पूजयेत्क्रमात्॥ १२॥
चतुरस्त्रे लोकपालाः पुनर्देवीं समर्च्चयेत्।

इति श्रीदक्षिणामूर्तिसंहितायां दण्डविजयनित्या
विधिः पञ्चाशः पटलः॥ ५०॥

---

(१) "षडक्षराणि चैकैको वसुकोणेषु वै स्वरान्" इति पा०।

# एकपञ्चाशः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि नित्यां वै सर्वमङ्गलाम् ।
जीवं चारुणताराढ्यं सर्वान्ते मङ्गलापदम् ॥ १ ॥
ङेऽन्तं हृदयमालिख्य नवार्णा सर्वमङ्गला ।
ऋषिश्चन्द्रो महेशानि गायत्री छन्द उच्यते ॥ २ ॥
देवीयं बीजशक्ती तु हृदयद्वन्द्वमेव च ।
विद्याभागत्रयेणैव द्विरावृत्या षडङ्गकम् ॥ ३ ॥
शुभ्रपद्मासने रम्यां चन्द्रकुन्दसमद्युतिम् ।
सुप्रसन्नां शशिमुखीं नानारत्नविभूषिताम् ॥ ४ ॥
अनन्तमुक्ताभरणां स्रवन्तीममृतद्रवम् ।
वरदाभयशोभाढ्यां स्मरेत्सौभाग्यवर्द्धिनीम् ॥ ५ ॥
एवं ध्यात्वा जपेद्वर्णलक्षं विजितमन्मथः ।
तद्दशांशेन जुहुयाच्छुभ्रपद्मैर्मधुप्लुतैः ॥ ६ ॥
अष्टपत्रं च भूबिम्बं तत्रावाह्य सुरेश्वरीम् ।
उपचारैः समभ्यर्च्य षडङ्गावरणं यजेत् ॥ ७ ॥
अष्टपत्रेषु सम्पूज्य पुरआदिक्रमेण तु ।
राका कुमुद्वती नन्दा शुद्धा सञ्जीवनी क्षमा ॥८॥
आप्यायनी चन्द्रकान्ता ह्लादिनी पुरतो यजेत् ।

ततो ब्रह्मादयः पूज्या भूबिम्बे चार्क्षरीसुराः ॥ ९ ॥
पुनः सम्पूज्य बहुधा चन्द्रमण्डलवासिनीम्।

इति श्रीदक्षिणामूर्तिसंहितायां सर्वमङ्गलानित्याविधिरेकपञ्चाशः पटलः ॥ ५१ ॥

## अथ द्विपञ्चाशः पटलः।

ईश्वर उवाच--

ज्वालामालां प्रवक्ष्यामि पुरुषार्थप्रदां सदा।
ॐकारं बीजमुच्चार्य नमो भगवतीति च ॥ १ ॥
ज्वालामालिनि देवि देवि सर्वभूतान्तसं लिखेत्।
हारकारिके जातवेदसीति ज्वलन्ति च ॥ २ ॥
ज्वलयुग्मं प्रज्वलेति युगं हूमात्मकं द्विधा।
वह्निर्द्विधा च कवचमस्त्रं चाऽपि समालिखेत् ॥ ३ ॥
चत्वारिंशद्वर्णरूपा स्वर्णचक्रे समाहरेत्।
ऋषिस्तु कश्यपश्छन्दो गायत्रं देवता त्वियम् ॥ ४ ॥
रेफास्त्रं बीजशक्ती तु कीलकं कवचं प्रिये।
रविसूर्यशरर्ष्यष्टवेदैरङ्गानि विन्यसेत् ॥ ५ ॥

(१) 'ककुबीश्वराः' इति पा०।

चत्वारिंशद्दलं पद्मं चतुराधिकमीश्वरि ।
बहिरष्टदलं पद्मं बाह्ये भूबिम्बमालिखेत् ॥ ६ ॥
कर्णिकायां महाविद्यां दलेषु क्रमतो लिखेत् ।
दुर्गावर्णास्ततो देवि वसुपत्रे स्वरान् लिखेत् ॥ ७ ॥
द्वन्द्वशः परमेशानि वह्निवर्णेन वेष्टयेत् ।
पुनर्विद्यां च भूबिम्बे प्रादक्षिण्येन पूजयेत्[1] ॥ ८ ॥
जातवेदस आलिख्य सुनवाम च सोमम ।
रातीयतो च निदहाति वेदः सन आलिखेत् ॥ ९ ॥
परिषान्ते दति प्रौढे दुर्गाणीति समालिखेत् ।
विश्वानावेव सिन्धुं च दुरितात्यग्निरालिखेत् ॥ १० ॥
एषा दुर्गा वरारोहे जातवेदःस्वरूपिणी ।
अस्मिन्यन्त्रे समासीनां ज्वालामालां प्रपूजयेत् ॥११॥
आदौ पीठं समभ्यर्च्य दिक्षु मध्ये च शक्तिभिः ।
जया च विजया भद्रा भद्रकाली सुमुख्यपि ॥१२॥
दुर्मुखी च तथा व्याघ्रमुखी सिंहमुखी तथा ।
दुर्गा चैतासु सम्पूज्या देवीमावाह्य पूजयेत् ॥ १३ ॥
आदावङ्गानि पूज्यानि ततो देवीं समर्चयेत् ।
जागती तपनी वेदगर्भा दहनरूपिणी ॥ १४ ॥
सेन्दुखण्डा शुभाद्या च हन्त्री नतमुखी तथा ।

---

(१) 'वेष्टयेत्' इति पा० ।

वागीश्वरी मदरुहा सोमरूपा मनोजवा ॥ १५ ॥
मरुद्वेगा च रात्रिश्च तीव्रकोपा यशोवती।
तोयान्विता[1] च नित्या च दयावत्यथ हारिणी ॥१५॥
तिरस्क्रिया वेदमाता तथा च मदनप्रिया।
समाराध्या नन्दिनी च परा च रिपुमर्दिनी ॥ १७ ॥
षण्मुखी दण्डिनी तिग्मा दुर्गा गायत्रिका तथा।
निरवद्या विशालाक्षी श्वासोद्वाहा च नन्दिनी ॥१८॥
वेदना वह्निगर्भा च सिंहवाहा तथैव च।
धूम्रा च दुर्वहा[2] चैव रिरंसा तापहारिणी ॥ १९ ॥
त्यक्तदोषा च सम्पन्ना[3] पुरआदि प्रपूजयेत्।
अष्टारे मातरः पूज्या भूबिम्बे ककुबीश्वराः ॥ २० ॥
पुनर्देवीं समभ्यर्च्य स्वर्णाभरणभूषिताम्।
उद्यद्विद्युल्लताकान्तिस्वर्णांशुकविराजिताम् ॥ २१ ॥
महासिंहासने प्रौढा ज्वालामालाकरालिनी।
अरिशङ्खं खड्गखेटे त्रिशूलं डमरुं तथा ॥ २२ ॥
पानपात्रं च वरदं दधती संस्मरन् यजेत्।
ज्वालामाला महाविद्या रिपुहन्त्रीं न संशयः ॥२३॥

इति श्रीदक्षिणामूर्तिसंहितायां ज्वालामालिनीनित्याविधिर्द्विपञ्चाशः पटलः ॥ ५२ ॥

---

(१) 'तोयात्मिका' इति पा०। (२) 'दुर्धरा' इति पा०।
(३) 'त्यक्तदोषा निःसपत्ना' इति पा०।

## अथ त्रिपञ्चाशः पटलः।

ईश्वर उवाच--

अथ वक्ष्ये महादेवीं विचित्रां विश्वमातरम्।
यस्याः स्मरणमात्रेण पलायन्ते महापदः॥ १॥
चक्रानुग्रहबिन्द्विन्दुभूषितं मनुमालिखेत्।
ऋषिर्ब्रह्माऽस्य मन्त्रस्य गायत्री छन्द उच्यते॥ २॥
विचित्रा देवता बीजं ककारः कीलकं च तु।
तारानुजश्च शक्तिः स्यात्पुरुषार्थप्रदायिनी॥ ३॥
षड्दीर्घस्वरभेदेन न्यसेदङ्गानि देशिकः।
यन्त्रं तु मातृकायास्तु पूजा देव्यास्तथा भवेत्॥ ४॥
मातरो लोकपालाश्च पूज्या देवीं यजेद् बुधः।
रावलक्षं दशांशेन हुनेद् घृततिलैर्यवैः॥ ५॥
स्तम्भने पीतवर्णेयं वश्ये बन्धूकसन्निभा।
मारणे श्यामलाङ्गीयमुच्चाटे धूमसन्निभा॥ ६॥
शुभ्राङ्गी ज्ञानदा नित्यं विचित्रवसना सदा।
विचित्रतिलका नित्यं विचित्रकुङ्कुमोज्वला॥ ७॥
वरदाभयशोभाढ्या नानाशस्त्रधरा क्वचित्।
क्रमेण कथिता नित्याः सर्वसौभाग्यदाः प्रिये॥ ८॥

इति श्रीदाक्षिणामूर्तिसंहितायां नित्याविवरणं नाम
त्रिपञ्चाशः पटलः॥५३॥

## अथ चतुःपञ्चाशः पटलः ।

ईश्वर उवाच—

एतत्सर्वात्मकं वस्तु त्रिपुरेत्याभिधीयते ।
एका सत्त्वात्मिका देवी जाग्रदित्याभिधीयते ॥ १ ॥
तदेयं शक्तिरूपा स्यात्सृजन्ती भुवनत्रयम् ।
उत्पत्तिर्जागरो बोधो व्यावृत्तिर्मनसः सदा ॥ २ ॥
कलाचतुष्टयं जाग्रदवस्थायां व्यवस्थितम् ।
एषैव तमसा युक्ता शिवरूपा निगद्यते ॥ ३ ॥
मरणं विस्मृतिर्मूर्च्छा निद्रा च तमसा वृता ।
सुषुप्तेस्तु कला ज्ञेया सुषुप्तिः शिवरूपिणी ॥ ४ ॥
यदा द्वन्द्वात्मिका देवी रजोरूपोभयात्मिका ।
संयोगः सत्त्वतमसो रज इत्यभिधीयते ॥ ५ ॥
सुषुप्त्यन्ते जागरादौ स्वप्नावस्था रजोमयी ।
अभिलाषो भ्रमश्चिन्ता विषयेषु मनःस्मृतिः ॥ ६ ॥
कलाचतुष्टयं स्वप्नावस्थायां तु विधीयते ।
गुणातीता यदा देवी सा तुर्येत्यभिधीयते ॥ ७ ॥
सुषुप्त्यादौ जागरान्ते स्वप्नावस्था रजोमयी ।
अभिलाषो भ्रमश्चिन्ता स्फुरत्तामात्रलक्षणा ॥ ८ ॥

अवस्थाशेषतां प्राप्ता तुर्या तु परमा कला ।
भावाभावविनिर्मुक्ता गुणातीता निगद्यते ॥ ९ ॥
वैराग्यं च मुमुक्षुत्वं समाधिविमलं[1] मनः ।
सदसद्वस्तुनिर्द्धारतुर्यायास्तु कला इमाः ॥ १० ॥
तुर्यैव परिपाकेन कला सप्तदशी भवेत् ।
चूतरम्भाफलादीनां पाकेन मधुरो रसः ॥ ११ ॥
अतएव महेशानि कला सप्तदशी भवेत् ।
उच्चार्यमाणा ये वर्णास्ते वर्णा वाचिका मताः[2] ॥१२॥
उच्चाररहितं वस्तु चेतसैव विचिन्तयेत् ।
चिन्तनात्सामरस्येन साक्षाद् ब्रह्मैव केवलम् ॥ १३ ॥
अत एव महाविद्या तुर्यरूपा वरानने ।
कलाषोडशकं चैव श्रीविद्यार्णेषु संस्थितम् ॥ १४ ॥
निःसरन्ति महामन्त्रा महाग्नेर्विस्फुलिङ्गवत् ।
[3]तथैव मातृका विद्या निःसृता वाग्भवात् प्रिये ॥ १५ ॥
अत एव तदेवास्या बीजं वाग्भवमुच्यते ।
तेनैव वाङ्मयेनासौ त्रैलोक्यं सचराचरम् ॥ १६ ॥

---

( १ ) 'शमादिविमलं मनः' इति पा० ।

( २ ) 'उच्चार्यमाणा ये मन्त्रास्ते मन्त्रा वाचिकाः प्रिये' इति पा० ।

( ३ ) 'तथैव मातृकावर्णा निःसृता बहवः प्रिये' इति पा० ।

मोहयन्ती तदा देवी कामेशी बीजरूपिणी ।

पुरुषस्त्रीमयेनासौ स्फुरन्ती विश्वमातृका ॥ १७ ॥

महामोहेन देवेशि कीलयन्ती जगत्त्रयम् ।

अतस्तत्कीलकं देवि तेन सौभाग्यगर्विता ॥ १८ ॥

पालयन्ती जगत्सर्वं तेनेयं शक्तिरुच्यते ।

ऐवं[1] कूटत्रयकला महासाम्राज्यदायिनी ॥ १९ ॥

तदा लक्ष्मीमयी देवी जागर्ति भुवनत्रये ।

महाकोशेश्वरीवृन्दमण्डिता भुवनेश्वरी ॥ २० ॥

एषैव कोशसम्पन्ना कामान् पूरयते परा ।

कामेश्वरी तदा देवी कामान् पूरयते सदा ॥ २१ ॥

महासिंहासनप्रौढा महा[2]विश्वस्वरूपिणी ।

अकथादिमहापीठहक्षवर्णस्वरूपिणी ॥ २२ ॥

तदा कल्पलता देवी वाक्प्रख्यै[3]ज्ञानसत्कला ।

सौभाग्यदायिनी नित्या रत्नतेजोविभूषिता ॥ २३ ॥

जीवानुग्रहसर्गेण स्फुरन्ती विश्वमातृका ।

चतुरायतनैर्वन्द्या चतुर्वेदनमस्कृता ॥ २४ ॥

साम्नायाऽभूत्तदा देवी भुवानानन्दमन्दिरा ।

अतस्त्रैलोक्यसाम्राज्यप्रदा नित्यात्मिका प्रिये ॥ २५ ॥

---

(१) एवं कूटत्रयकला' इति पा० ।

(२) 'विश्वाधारस्वरूपिणी' इति पा० ।

(३) वाक्पुष्पज्ञानसत्कला' इति पा० ।

एतत्सर्वं पुरस्कृत्य वर्त्तते त्रिपुरा शिवा ।
प्रपञ्चमध्ये देवेशि केवला ब्रह्मरूपिणी ॥ २६ ॥
अत एव महादेवि कला सप्तदशी भवेत् ।
षोडशार्णस्वरूपा च नित्याषोडशिकात्मिका ॥ २७ ॥

इति श्रीदक्षिणामूर्तिसंहितायां श्रीनित्याविवरणं
नाम चतुःपञ्चाशः पटलः ॥ ५४ ॥

## अथ पञ्चपञ्चाशः पटलः ।

श्रीदेव्युवाच—

त्रिपुरा परमेशी च सर्वमन्त्रमयी शिवा ।
संविद्रूपा तु कथिता कथं पूज्या सदाशिव ॥ १ ॥

ईश्वर उवाच—

प्रातरुत्थाय शिरसि संस्मरेत्पद्ममुज्ज्वलम् ।
कर्पूराभं स्मरेत्तत्र श्रीगुरुं निजरूपिणम् ॥ २ ॥
सुप्रसन्नं लसद्भूषामाण्डितं शान्तिभूषितम् ।
वराभयकरं नित्यं नमस्कृत्याऽमुना यजेत् ॥ ३ ॥

हस्त्रौमात्मकमालिख्य हसक्षमलवानिलान्।
वह्नियुक्तांस्त्रिधा लेख्य त्रिधा सम्भूष्य च स्वरैः ॥ ४॥
मुखवेष्टनवामाङ्गश्रुतिनेत्रैश्च मण्डितैः।
बीजत्रयमिदं भद्रे बिन्दुनादकलात्मकम् ॥ ५ ॥
श्रीपरान्ते पावकेति सर्वाराध्यपदं लिखेत्।
सर्वमूर्द्धपुरान्ते च नाथसर्वगुरुस्वयम ॥ ६ ॥
गुरुश्रीगुरुनाथान्ते रहसक्षमलवयान्।
रेफदीर्घश्रुतियुतबिन्दुनादकलात्मकान् ॥ ७ ॥
पिण्डीकृत्य लिखेदाद्यं चतुर्थं च ततो लिखेत्।
तृतीयं पूर्ववल्लेख्यं द्वितीयमपि पार्वति ॥ ८ ॥
ततः श्रीशम्भुगुर्वन्ते पुनराद्यं समालिखेत्।
आद्यकृत्यं चतुष्कान्ते चाद्यं तार्तीयमालिखेत् ॥ ९॥
वसुसंख्यैश्च देवेशि चत्वारिंशद्भिरक्षरैः।
मण्डितोऽयं मनुर्देवि स्मरेन्निजगुरुं प्रिये ॥ १० ॥
मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम्।
उद्यदादित्यरुचिरां स्मरेदशुभशान्तये ॥ १ ॥
क्लीमात्मकं कामदेवं सर्व्वान्ते जन चालिखेत्।
प्रियाय हृदयान्तोऽयं मनुर्दन्ताविशुद्धये ॥ १२ ॥
चतुर्ल्लक्ष्म्यणुभिर्वक्त्रं क्षालयेत्सिद्धिहेतवे।
स्नानकर्म्म ततः कुर्य्यान्मूर्द्धान्तं प्रोक्षयेत्तनुम् ॥१३॥

सम्प्रोक्ष्य गुह्यमुद्राढ्यो मन्त्री पापनिकृन्तनः।
आत्मविद्याशिवैस्तत्त्वैराचमेद्विधया त्रिधा।
विविधं तर्पणं कुर्य्याद्देवर्षिविधिपूर्वकम्। १३॥
विद्ययाऽथ ततो मन्त्री सर्वालङ्कारभूषणः।
रक्तवस्त्राङ्गरागस्तु रक्तासनगृहे स्थितः॥ १४॥
विद्यया तत्त्वरूपिण्या त्रिधाऽऽचम्याभिषेचनम्।
विद्ययैव त्रिधा देवि चुलुकेनोदके सुधीः॥ १५॥
गृहीत्वा चिन्तयेत्तत्र वह्निनाडीगतं प्रिये।
वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम्॥ १६॥
ब्रह्महत्या शिरो यस्य स्वर्णस्तेयं[1] करौ प्रिये।
सुरापानं हृदङ्गानि पातकानि बहून्यपि॥ १७॥
उपपातकसङ्घास्तु रोमाणि परमेश्वरि।
नानापातकसङ्घास्तु सर्वाङ्गाणि च चिंतयेत्॥ १८॥
खड्गचर्म्मधरं पापं मानसे चिंतयेद् बुधः।
भूमौ वज्रशिलां ध्यात्वा धातयेत्तत्र सुन्दरि॥ १९॥
[2]अथार्घ्यं च पुनर्द्द्यात्त्रिधा मूलमनुस्मरन्।
हल्लेखा हृदयं देवि शिरो हंसस्ततो वदेत्॥ २०॥
वेदाक्षरमहाविद्या सर्वसाराधिदेवता।

---

(१) 'स्वर्णस्तेयकटिद्वयम्' इति पा०।
(२) 'अथार्घ्यं चषकैर्द्द्यात्त्रिधा सौरं मनुं स्मरन्'। इति पा०।

भास्वद्रत्नौघमुकुटां स्फुरच्चन्द्रकलाधराम् ॥ २१ ॥
सद्यः संतप्तहेमाभां सूर्य्यमण्डलरूपिणीम् ।
पाशाङ्कुशाभयवरां स्मेरं[1]दनु जपेत्ततः ॥ २२ ॥
गायत्री सुभगायास्तु त्रिधा बीजस्वरूपिणी ।
वाग्भवान्ते लिखेद्देवि वाग्भवे वि[2]श्वाविग्रहे ॥ २३ ॥
द्वितीयं कूटमुच्चार्य्य कामिनीश्वरि धीमहि ।
तृतीयं कूटमुच्चार्यं तन्नः शक्तिः प्रचोदयात् ॥२४॥
यथाशक्ति जपं कुर्यात् श्रीविद्यां च ततो जपेत् ।
अथ यागगृहं पुण्य[3]मलक्तकविभूषितम् ॥ २५ ॥
अनेकचित्रसुभगं भूमौ गोमयचर्चितम् ।
उपविश्योल्लसत्पुष्पं सुभगं धूपधूपितम् ॥ २६ ॥
दीपमालावलीरम्यं विकीर्णकुसुमोज्वलम् ।
तत्रागत्य यजेद्विद्वान् मौनी ज्ञानी सदा शुचिः २७
सर्वाभरणसम्पन्नास्त्रिपुरार्चनमण्डपम् ।
ङेऽन्तं नमोऽनेन पूजामण्डपस्य सुलोचने ॥ २८ ॥
गणपं क्षेत्रपालं च धातारं च विपूर्वकम् ।
गङ्गा च यमुना चैव तथा शङ्खनिधिः क्रमात् ॥२९॥

---

( १ ) 'स्मरेदथजपेत्ततः' । इति पा० ।
( २ ) 'वाग्भवेश्वरिविद्महे' इति पा० ।
( ३ ) 'अथयागगृहं यायात्' इति पा० ।

ततः पद्मानिधिं चेष्ट्वा वास्त्वन्ते पुरुषं यजेत् ।
द्वारश्रीं च गणेशं च पूजयेच्च सरस्वतीम् ॥ ३० ॥
देहलीमपि सम्पूज्य पूजयेद् द्वारमण्डलम् ।
हृल्लेखां च श्रियो बीजमादौ संयोजयेत्ततः ॥ ३१ ॥
नामान्ते श्रीपदं वाच्यं पादुकां पूजयामि च ।
अनेन क्रमयोगेन सम्पूज्याः सर्वमातरः ॥ ३२ ॥
रक्तासनोपाविष्टस्तु चक्रोद्धारं समाचरेत् ।
शक्त्योपरिष्टाच्छक्तिं तु विलिखेद्विस्तृतां सकृत् ॥३३॥
वह्निनान्ते पुटीकुर्य्यात्सन्धिभेदक्रमेण तु ।
अग्नीशासुरवायव्यरेखा विस्तार्य्य योजयेत् ॥ ३४ ॥
दशकोणं यथा देवि जायते तद्वदेव हि ।
मध्यकोणचतुष्कस्य रेखे आकृष्य बुद्धिमान् ॥ ३५ ॥
तत्तत्सन्धिविभेदेन मन्वस्रं जायते यथा ।
समत्रिकोणशक्त्यैकं सुखदं नेत्रयोर्य्यथा ॥ ३६ ॥
सुश्रीकं संधिभेदेन ऋजुरेखाविजृम्भितम् ।
वहिरष्टदलं पद्मं सुवृत्तेन समालिखेत् ॥ ३७ ॥
तद्वत्षोडशपत्रं हि विलिखेत्पद्ममुत्तमम् ।
त्रिवृत्तं परमेशानि ततो भूबिम्बमालिखेत् ॥ ३८ ॥
चतुर्द्वारविशोभाढ्यं पुष्पं तत्र विनिःक्षिपेत् ।
गण्डकीभवपाषाणे स्वर्णे रजतताम्रयोः ॥ ३९ ॥

काश्मीरदर्प्पणे भूर्जे पूर्वपीठे[1] लिखेद् बुधः ।
शलाकया सुवर्णस्य मिश्रया घुसृणेन्दुभिः ॥ ४० ॥
सिन्दूररजसा मिश्रैः पट्टे धातुमये लिखेत् ।
अथवा भूतले देवि सुरेखं कुङ्कुमेन वा ॥ ४१ ॥
सिंदूररजसा वापि लिखेत्सर्वार्थसिद्धये ।
एतच्चक्रं महेशानि मध्ये बिन्दुविराजितम् ॥ ४२ ॥
त्रिकोणं चैव चाष्टारं दशारं च दशारकम् ।
मनुकोणं महेशानि मध्ये चक्रमिदं प्रिये ॥ ४३ ॥
बैन्दवादष्टकोणान्तं सर्वमध्यं सुरेश्वरि ।
चत्वारिंशद्भगैर्युक्तं त्रिभगैरपि पार्वति ॥ ४४ ॥
वसुपत्रं कलापत्रं चतुरस्रं क्रमात् प्रिये ।
भगात्मकमिदं भद्रे नवयोन्यङ्कितं भवेत् ॥ ४५ ॥
यथेष्टाशामुखो मन्त्री तत्तत्कर्म्मविधौ सुधीः ।
प्राङ्मुखः सम्यगासीनो गुरुं नत्वा निजं ततः ॥४६॥
पूर्वोक्तमनुना सम्यक् गुरुनाम च संस्मरन् ।
पार्ष्णिघातकरास्फोटैरूर्ध्वचक्रैस्तु मान्त्रिकः ॥४७॥
खभूभूतानि सन्त्रास्य करशुद्ध्यादिकं यजेत् ।
आद्यं द्वितीयवर्णाभ्यां त्रिपुरायान्तिमं लिखेत् ॥४८॥
आद्यं द्वयं बिन्दुनादकलाढ्यं त्रिपु[टं]भवेत् ।

---

( १ ) 'अर्चापीठे' इति पा० ।

तन्त्रमस्या महेशानि त्रिपुरेशीव नान्यथा ॥ ४९ ॥
मध्यमादितलान्तं तु करशुद्धिविधौ यजेत् ।
तत आत्मासनं दद्यात्सुन्दर्य्या परमेश्वरि ॥ ५० ॥
वाग्भवं त्रिपुरेश्वर्य्या हित्वा तत्र विनिःक्षिपेत् ।
हृल्लेखा सुन्दरी नाम त्रिपुरेशीव पूजनम् ॥ ५१ ॥
चक्रासनं ततो दद्यात्पुरवासिन्यधिष्ठितम् ।
शिवबीजादिमं बीजत्रयमेतदुदारधीः ॥ ५२ ॥
त्रिपुरेश्यास्तु विधेयं त्रिपूरेशीव पूजनम् ।
त्रिपुरेशी हसाद्या स्याद्बीजयुग्मे तथान्तिमे ॥ ५३ ॥
शिवाद्या श्रीरियं सर्व्वमन्त्रासनाविधौ यजेत् ।
सुन्दर्य्या अन्तिमं हित्वा बलेमात्मकमक्षरम ॥ ५४ ॥
संयोज्ज्या मालिनी देवी साध्यसिद्धासनस्थिता ।
तन्त्रमस्या महेशानि त्रिपुरेशीव सम्भवेत् ॥ ५५ ॥
आत्मरक्षां प्रकुर्वीत त्रिपुरेश्या महेश्वरि ।
सम्पत्प्रदा भैरवीयमन्ते सर्ग्गसमन्विता ॥ ५६ ॥
मूर्त्यावाहनाविद्या तु सिद्धान्ता परमेश्वरि ।
सम्पत्प्रदा भैरवीव यजन परमेश्वरिं ॥ ५७ ॥

इति श्रीदक्षिणामूर्तिसंहितायां करशुद्ध्यादिविद्याविधिः
पञ्चपञ्चाशः पटलः ॥५५॥

## अथ षट्पञ्चाशः पटलः।

ईश्वर उवाच—

शिवचन्द्रौ मन्मथोरः शक्तिर्वै बिन्दुमालिनी।
क्षमाबिन्द्वर्द्धमात्राश्च नववर्णा भवन्ति हि ॥ १ ॥
शिवशक्तिमयी देवी व्योमाकारेण संस्थिता।
विश्वमात्मनि चिद्रूपे वहन्ती सकलालया ॥ २ ॥
चन्द्रेण द्रावयन्तीयं मूलादिब्रह्ममन्दिरा।
आप्लावयन्ती सकलं सृजन्ती विश्वमातरम्[2] ॥ ३ ॥
मन्मथेन मनोरूपा तस्मात्तेजोमयी ततः।
विस्तारयन्ती सकलं विश्वयोनिरितीरिता ॥ ४ ॥
अन्तःकरणवृत्त्यां तु विश्वान्तर्म्मातृका भवेत्।
नादरूपा परा शक्तिर्बिन्दुरूपा तथा परा ॥ ५ ॥
अन्तर्म्मायातिविख्याता ययेदं धार्य्यते जगत्।
अतएव क्षमारूपा जगद्धात्री परा भवेत् ॥ ५ ॥
बिन्दुरूपा पराशक्तिर्नादरूपा महेश्वरि।
नादातीता विचारे तु विचारागोचरा ततः ॥ ७ ॥
एवं ब्रह्ममयैर्वर्णैर्ज्ञाप्यते त्रिपुरामनुः।

---

(१) 'शिवाच्छून्यमयी' इति पा०।

(२) 'विश्वमातृका' इति पा०।

नान्यैर्वर्णैर्म्महामन्त्राः सुभगाया भवन्ति हि ॥ ८ ॥
शुद्धाश्च शबला मन्त्रास्तथा चोभयसंज्ञकाः ।
शुद्धविद्याः श्रृणु प्रौढे सर्वाम्नायैर्नमस्कृताः ॥ ९ ॥
कामाकाशौ शक्तितूर्य्यभूमा वाग्भवकं यजेत् ।
अनेन च विलिख्यान्ते विद्याः सर्वागमेश्वरि ॥ १० ॥
मादनानुजहः कामो मदनाग्रज उच्यते ।
हित्वानुजं शिवं साग्रं विद्येयं मनुपूजिता ॥ ११ ॥
कामः सहाग्रजो वापि शिवं कामानुजं विना ।
सहाद्यं मदने शक्तौ सहाद्यं कानुजं विना ॥ १२ ॥
चन्द्राराधितविद्येयं भुक्तिमुक्तिफलप्रदा ।
अनुजेन विना कामो हसादिर्वाग्भवे स्मरे ॥ १३ ॥
हसादिः सहकः शक्तावग्रस्थ इति गीयते ।
कुबेराधिष्ठिता विद्या भुक्तिमुक्तिफलप्रदा ॥ १४ ॥
हित्वा हं वाग्भवं कामे हसादिको महामनुः ।
तूर्य्यैकादशमे हित्वा शक्तिकूटे[२]ऽथ लिख्यते ॥ १५ ॥
कामानुजत्रयं हित्वा सहसाद्योऽग्रजस्तथा ।
लोपामुद्रोपासितेयं भुक्तिफल[३]प्रदायिनी ॥ १६ ॥

---

( १ ) 'मनुहृद्गता' इति पा० ।
( २ ) 'शक्तिकूटेऽप्यथो लिखेत्' इति पा० ।
( ३ ) 'भुक्तिमुक्तिफलप्रदा' इति पा० ।

इयं विद्या शाक्तिकूटे सहकोणानुसिद्धिदा[1] ।
कामराजाधिष्ठितेयं[2] भुक्तिमुक्तिफलप्रदा ॥ १७ ॥
एतस्या एव विद्यायाः शक्तिबिन्दुमतीद्वयम् ।
हित्वा हसादिर्गदिता ऽगस्त्याराधितदेवता ॥ १८ ॥
धर्मार्थकाममोक्षाणामालयं सम्प्रदायतः ।
हित्वाद्ययुगलं वाचि साद्यं कामे ।शिवादिकम् ॥१९॥
शक्तिबिन्दुस्रजं त्यक्त्वा कामं तत्र विनिक्षिपेत् ।
शक्त्या चागस्त्यविद्येयं नन्द्याराधितदेवता ॥ २० ॥
कानुजानां त्रयं त्यक्त्वा हसाद्यं वादिमन्मथे ।
सहाद्यमन्त्ये सहयोर्म्मध्ये कः सूर्य्यपूजिता ॥ २१ ॥
अगस्त्यकूटात्रितयं सूर्य्यकामं समालिखेत् ।
पुनस्तत्कलमध्येशं तार्तीयं वाथ संलिखेत् ॥ २२ ॥
सहाद्यं विष्णुपूज्ज्येयं षट्कूटा परमेश्वरी ।
अगस्त्याद्यं वाग्भवं स्यादेतदेव सकादिकम् ॥ २३ ॥
विष्णुविद्यापञ्चमं च स्कन्दाराधितदेवता ।
अगस्त्यस्य द्विधा विद्यां विलिख्य मनुवित्तमः ॥२४॥
चतुर्थीं पञ्चमीं मायां त्यजेच्छवहृदि स्थिताम् ।
वाग्भवस्थं चतुष्कं च कामराजस्थपञ्चकम् ॥ २५ ॥

---

( १ ) 'ऽसहकेनार्थसिद्धिदा' इति पा० ।
( २ ) 'कामराजाराधितेयं' इति पा० ।

शक्तिकूटत्रिकार्णं च कामराजस्य संलिखेत् ।
मायास्थाने हरीवर्णयुगलं च क्रमाल्लिखेत् ॥ २६ ॥
दुर्वाससा पूजितेयं पुरुषार्थप्रदायिनी ।
एते द्वादश मन्त्राः स्युः शुद्धाः सर्वार्थसिद्धिदाः॥२७॥
अन्येऽपि शुद्धभेदाः स्युः कथ्यन्ते कृपया तव ।
भेदस्तु मनुविद्यानां नास्ति सर्वागमेष्वपि ॥ २८ ॥
शिवचन्द्रकलाशक्ती हृल्लेखा वाग्भवो भवेत् ।
जीवेशमादनैकाराबिन्दुस्रक् पृथिवी परा ॥ २९ ॥
एतत्कामे च तार्तीये द्वितीया चन्द्रपूजिता ।
कुबेरशक्तिकूटं च कामकूटं समालिखेत् ॥ ३० ॥
वाग्भवं कामराजं च शक्तिबीजमथो लिखेत् ।
शिवकामेशशक्तिर्ले परा धनदपूजिता ॥ ३१ ॥
अपरेयं महाविद्या लोपामुद्राऽत्र कथ्यते ।
अगस्त्यस्य महाविद्या कामराजः स एव हि ॥ ३२ ॥
विष्णुं तिमं (?) वाचि कामं सादि कामस्य मन्मथम् ।
सह कामान्त्ययुग्मादि शक्तौ नन्दीशपूजिता ॥ ३३ ॥
अगस्त्याराधिता विद्या सैवागस्त्यप्रपूजिता ।
भेदस्तु सूर्य्यविद्याया नास्त्येव परमेश्वरि ॥ ३४ ॥
विष्णुविद्यान्तरं वक्ष्ये कूटत्रयविराजितम ।
जीवेशक्ष्मापरा विद्या कामेऽया विष्णुपञ्चकम् ॥ ३५ ॥

शक्तौ कामान्तिमं विद्याद् द्वितीया विष्णुपूजिता।
हसशक्तिकभूमायाकूटमेतत्त्रिधा लिखेत् ॥ ३६ ॥
वाचि कामे तथा शक्तौ स्कन्दपूज्ज्या परा भवेत्।
अगस्त्यस्य मनौ ज्ञेया परा वाचि हलान्तगा ॥ ३७ ॥
कामत्रयान्ते भूजीवौ त्रिकूटे शिवपूजिता।
एते भेदा वरारोहे शुद्धाः सिद्धिप्रदायकाः ॥ ३८ ॥
शुद्धभेदद्वयं वक्ष्ये भोगमोक्षफलप्रदम्।
जीवेशकामभूमाया वाचि कामे ततो लिखेत् ॥ ३९ ॥
इदमेव पुनः शक्तौ विद्येयं शक्रपूजिता।
कशक्तिविन्दुमालाक्ष्माः शक्तिकूटं षडक्षरम् ॥ ४० ॥
वाचि कामे हकाकाशक्ष्माकाशाग्निसमान्वितम्।
शक्तौ हसकलाकाशवह्निमत्परमेश्वरि ॥ ४१ ॥
उन्मनी नाम विद्येयं केवलं मोक्षदायिनी।
एते शुद्धाः सदा जप्याः सिद्धिदा नात्र संशयः ॥४२॥
अथ वक्ष्ये महेशानि मन्त्रान् शबलसंज्ञकान्।
कामराजस्य विद्याया मध्यं जीवं विनोच्चरेत् ॥ ४३ ॥
अन्त्ये जीवः शिवस्याद्ये विद्या वरुणपूजिता।
एतस्या एव विद्याया हित्वा विन्दुस्रजं क्षिपेत् ॥४४॥
तत्रैव कामविद्येयं धर्म्मराजसुपूजिता।
कसकक्ष्मादिहल्लेखा हसलस्मरहः क्षमा ॥ ४५ ॥

हृल्लेखा मन्मथे शक्तौ सकलाग्निमयी परा।
वह्निना पूजिता विद्या महाविघ्नौघघातिनी ॥ ४६ ॥
अगस्त्यकूटयुगलं वह्निपूज्यान्तिमं लिखेत्।
विद्या पन्नगराजेन पूजिता भुक्तिमुक्तिदा ॥ ४७ ॥
कशक्तिवह्नियुगुलं भूत्रह्निर्भुवनेश्वरि।
हकलाग्निहलामाया सरकक्ष्माग्निमण्डिता ॥ ४८ ॥
माया वायुप्रपूज्येयं महापापौघभञ्जनी।
कशक्तिवैन्दवी वह्निक्ष्मामायाहकहात्परौ ॥ ४९ ॥
मायासहकशक्राग्निमायेयं सौम्यपूजिता।
कामाकाशक्ष्मामायाशिवकामहभूचराः ॥ ५० ॥
मायाकाशे शक्तिकूटे सकला भुवनेश्वरी।
ईशानाधिष्ठिता विद्या सर्वकामप्रपूरणी ॥ ५१ ॥
कामराजस्य युग्मान्ते जीवक्ष्मामदनापरा।
रव्याराधितविद्येयं सर्वकामार्थसाधिका ॥ ५२ ॥
कामाधिष्ठितविद्यान्ते बिलोमान्तां समालिखेत्।
नारायणाधिष्ठितेयं षट्कूटा परमेश्वरि ॥ ५३ ॥
कामाद्यं वाग्भवे कामे हकहक्ष्मा परा भवेत्।
शक्तावगस्त्यवाक्कूटं विद्येयं ब्रह्मपूजिता ॥ ५४ ॥
अगस्त्यं वाग्भवं वाचि ब्रह्मविद्यान्तिमद्वयम्।
जीवार्चिता महाविद्या सर्वकामप्रपूरणी ॥ ५५ ॥

एभिर्द्वादशभिर्भेदैः शबलाः परमेश्वरि ।
शुद्धाशुद्धा महाभेदा ज्ञातव्याः परमेश्वरि ॥ ५६ ॥
विद्याः संलिख्य शुद्धास्तु विपरीतास्ततो लिखेत् ।
ता एव हि तदा शुद्धाः शुद्धभेदा भवन्ति हि ॥५७॥
यावन्तः शुद्धभेदाः स्युस्तावन्तश्च क्रमात् प्रिये ।
तथैव शबलद्वन्द्वभेदा देवि भवन्ति हि ॥ ५८ ॥
भेदाः सर्वेऽन्त्ययाऽऽपीड्य मायया तुर्य्यसंज्ञकाः ।
ते ज्ञानगहना ब्रह्मरूपास्तु परमेश्वरि ॥ ५९ ॥
ज्ञातव्या गुरुवक्त्रेण त्वन्यथा शापमाप्नुयात् ।
अथ वक्ष्ये महेशानि चतुर्द्धा ज्ञानमुत्तमम् ॥ ६० ॥
एकधा कथितं चैतत्प्रकारान्तरमुच्यते ।
यस्य स्मरणमात्रेण वाजपेयशतं भवेत् ॥ ६१ ॥
वक्ष्यमाणं बीजयुग्ममादौ संयोज्य संस्मरेत् ।
पराशरेन्दुनागाद्यं द्वितीयं भेद उच्यते ॥ ६२ ॥
एतद्भेदादिसंसेव्यं तृतीयो भेद उच्यते ।
स्वयं ब्रह्मा महेशानि सकृदुच्चारणाद् बुधः ॥ ६३ ॥
अथ तुर्यप्रकारश्च कथ्यते भुवि दुर्लभः ।
यस्याः स्मरणमात्रेण पलायन्ते महापदः ॥ ६४ ॥

---

( १ ) "पाराशरे स्वरेन्द्वादिद्वितीय भेदउच्यते" इति पा० ।

स्वयं ब्रह्मा स्वयं विष्णुः स्वयं रुद्रो न संशयः ।
किं पुनर्देवदेवेशि स्वयं काम[1]ः स्वयं प्रभुः ॥ ६५ ॥
अश्वमेधसहस्राणि वाजपेयस्य कोटयः ।
नरमेधसहस्राणि सकृदुच्चारणात्प्रिये ॥ ६६ ॥
काश्यादितीर्थयात्रास्तु प्रादक्षिण्यं भुवस्तथा ।
गङ्गास्नानसहस्राणि नामोच्चारणमन्त्रिणः ॥ ६७ ॥
किं पुनर्देवि साक्षात्तु मन्त्रा ब्रह्म न संशयः ।
द्वितीयस्यादियुग्मं तु विपरतिं लिखेत्सुधीः ॥ ६८ ॥
कलावन्तर्मुखं कृत्वा विलिखेच्च ततः परम् ।
एतत्सम्पुटितं कृत्वा तृतीयं परमेश्वरि ॥ ६९ ॥
श्रीविद्येयं मया ख्याता वर्णितुं नैवं शक्यते ।
जिह्वाकोटिशतैर्देवि वक्त्रकोटिशतैरपि ॥ ७० ॥
पञ्चास्येन कथं देवि वर्णितुं शक्यते मया ।
श्रीविद्या सर्वविद्यानां राज्ञी स्तोतुं न शक्यते ॥ ७१ ॥
षोडशाक्षरसम्पन्ना स्वयं पञ्चदशी कला ।
श्रीगुरोः कृपया ल[2]भ्या सर्वसिद्धिप्रदायिनी ॥ ७२ ॥
अन्ते निरामयं ब्रह्म मन्त्री भवति नान्यथा ।
ब्रह्महत्यासुरापानस्वर्णस्तेयादिपातकान् ॥ ७३ ॥

---

( १ ) "स्वयं कामेश्वरो विभुः" इति पा० ।
( २ ) 'लब्धा' इति पाठान्तरम् ।

उपपातकलक्षाणि हन्ति श्रीस्मरणं क्षणात् ।
सर्वे कल्याणमन्त्रास्तु भवन्ति परमेश्वरि ॥ ७४ ॥
एकोनविंशवर्णस्तु नारायणहरिद्वये ।
शिवविद्या महेशानि सिद्धाः सप्तदशाक्षराः ॥ ७५ ॥
द्वन्द्वविद्यास्तु सकला एकोनविंशदक्षराः ।
नारायणी वैष्णवी च पञ्चविंशतिवर्णिका ॥ ७६ ॥
ज्ञातव्या गुरुवक्त्रेण नान्यथा [1]फलमाप्नुयात् ।
चतुःषष्टिर्यतः कोट्यो योगिन्यो मातृमण्डलात् ॥७७॥
विना गुरूपदेशेन साधकं नाशयन्ति हि ।

इति श्रीदक्षिणामूर्तिसंहितायां श्रीविद्याविवरणं
नाम षट्पञ्चाशः पटलः ॥ ५६ ॥

---

(१) 'नान्यथा शापमवाप्नुयात्' । इति पा० ।

## अथ सप्तपञ्चाशः पटलः ।

ईश्वर उवाच—

श्रीविद्यामानसो भूत्वा वामभागे महेश्वरि ।
चतुरस्रं जलेनैव मण्डलं पूरयेत्प्रिये ॥ १ ॥
गन्धपुष्पाक्षतैस्तत्र यन्त्रिकां पूजयेत्तथा ।
शङ्खं तत्र तु संस्थाप्य जलपूर्णं सहेतुकम् ॥ २ ॥
सम्यगभ्यर्च्य तेनैव त्रिपुरामण्डलं यजेत् ।
चतुरस्रं लिखेत्तत्र यन्त्रिकां स्थापयेत्सुधीः ॥ ३ ॥
त्रिकोणवृत्तषट्कोणं मण्डलं पूजयेत्क्रमात् ।
समस्तां व्यस्तरूपां च त्रिकोणे पूजयेच्छुचिः ॥४॥
द्विरावृत्त्या षडङ्गैस्तु षट्कोणेषु प्रपूजयेत् ।
आद्यबीजेन वह्निं तु यन्त्राकारेण पूजयेत् ॥ ५ ॥
हेमादिनिर्मितं पात्रं नारिकेलोद्भवं प्रिये ।
महाशङ्खं विशेषेण भुक्तिमुक्तिफलप्रदम् ॥ ६ ॥
नालिकेरोद्भवं पात्रं सर्वैश्वर्यसुखप्रदम् ।
मुक्तिप्रदं विशेषेण सर्वकर्मकरं सदा ॥ ७ ॥
गन्धादिनार्चितं धूपधूपितं पात्रमुत्तमम् ।
यन्त्रिकायां प्रतिष्ठाप्य पूर्वोक्तं यन्त्रमालिखेत् ॥८॥

---

(१) 'पुरतो' इति पा० ।

(२) 'पूजयेत्' इति पाठान्तरम् ।

तथैव पूजयेत्कामकूटमुच्चार्य सुन्दरि ।
सूर्यपात्रमयं तत्र विशेषेण च योजयेत् ॥ ९ ॥
[1]भागद्वयाविशेषस्य [2]भागमात्रं जलं क्षिपेत् ।
तत्रापि संलिखेत्पूर्वं यन्त्रपूजां च कारयेत् ॥ १० ॥
त्रिकोणे पूजयेद्विद्यां मध्ये कोणत्रयं ततः ।
कूटत्रयं क्रमेणैव यथा विद्या तथाविधम् ॥ ११ ॥
श्रीविद्याविषये देवि सम्पुटत्वेन पूजयेत् ।
सर्वत्रायं क्रमो देव्या नात्रालस्यं चरेत्प्रिये ॥ १२ ॥
देवीमूलषडङ्गानि क्रमेण परिपूजयेत् ।
शक्तिकूटं समुच्चार्य तज्जलं चन्द्ररूपकम् ॥ १३ ॥
सम्पूज्य मध्ये त्र्यस्रं तु मातृकात्मकमाचरेत् ।
पञ्चकोशमहाविद्याःसंस्मरेत्तत्र सुन्दरि ॥ १४ ॥
तार्त्तीयं श्रीगुरोर्बीजं हंसविद्यामनुं यजेत् ।
रुद्रः [3]स्वयं च देवेशि श्रीविद्यां सप्तधा जपेत् ॥१५॥
स्पृष्ट्वार्घं च ततो गन्धं पुष्पाद्यैरर्चयेत्ततः ।
चिदानन्दमयं धाम नेत्रद्वारागतं स्मरेत् ॥ १६ ॥
प्रोक्षयेत्तेन सकलं पूजाद्रव्यान्तरं ततः ।
आत्मानमपि सर्वं तद्विद्यारूपं भवेत्प्रिये ॥ १७ ॥

---

(१) 'भागत्रयावशेषस्य' इति पा० ।
(२) 'त्रिभागन्तु' इति पा० ।
(३) 'वारत्रयं' इति पा० ।

अङ्गुष्ठानामिकाभ्यां तु वाममार्गेण सुन्दरि ।
तत्त्वमुद्रेयमाख्याता महापापनिकृन्तनी ॥ १८ ॥
अङ्गुष्ठतर्जनीभ्यां तु ज्ञानमुद्रेयमीरिता ।
अनया पुष्पपूजा स्यात्तथा तर्पणपूजने ॥ १९ ॥
भूतशुद्धिविधिं कुर्यान्मन्त्री देहस्य शुद्धये ।
वायुबीजेन देहस्थधातवः पापसंयुताः ॥ २० ॥
संशोष्य वह्निबीजेन पापेन सहितं दहेत् ।
पापं विना पुनर्देहममृतीकृत्य जीवयेत् ॥ २१ ॥
जलबीजेन देवेशि पार्थिवेन स्थिरीकुरु ।
ततो देहस्य सन्नाहं सम्यग् न्यासं समाचरेत् ॥२२॥
करशुद्धिविधिं कृत्वा चतुरासनदेवताः ।
पादयोर्जङ्घयोर्जान्वोर्मूलाधारे च विन्यसेत् ॥ २३ ॥
कनिष्ठाङ्गुष्ठरहितैस्त्रिभिस्तु हृदि विन्यसेत् ।
मध्यमानामिकाभ्यां तु न्यसेच्छिरासि मन्त्रवित् ॥२४॥
शिखाङ्गुष्ठेन विन्यस्य दशभिः कवचं न्यसेत् ।
हृद्गतैर्नेत्रविन्यासं विन्यसेत्परमेश्वरि ॥ २५ ॥
तर्जनीमध्यमाभ्यां तु ततोऽस्त्रं विन्यसेत्प्रिये ।
आत्मरक्षाकरीं विद्यां द्विरुच्चार्य न्यसेद् बुधः ॥२६॥
व्यापकत्वेन मूर्त्तिं तु विन्यसेत्सिद्धिहेतवे ।

---

( १ ) 'वामकर्णेन इति पा० ।

अथ वक्ष्ये महेशानि श्रीविद्यान्यासमुत्तमम् ॥२७॥
सम्पूर्णां चिन्तयेद्विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम् ।
स्रवत्सुधां षोडशार्णां महासौभाग्यदां स्मरेत् ॥२८॥
वामांसदेशे सौभाग्यदण्डिनीं भ्रामयेत्ततः ।
रिपुजिह्वाग्रहां मुद्रां पादमूले विनिःक्षिपेत् ॥ २९ ॥
त्रैलोक्यस्य त्वहं कर्त्ता ध्यात्वैवं तिलके न्यसेत् ।
सम्पूर्णामेव वदने वेष्टनत्वेन विन्यसेत् ॥ ३० ॥
व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाऽभिवन्द्य च ।
त्रैलोक्यं क्षोभयत्याशु न्याससन्नद्धविग्रहः ॥ ३१॥
मुष्टिं ध्यात्वोच्चरेन्मन्त्री तर्जनीं दण्डवत्तथा ।
सौभाग्यदण्डिनी नाम रिपून्दण्डयते क्षणात् ॥३२॥
अङ्गुष्ठं मुष्टिगं कुर्याद्रिपुजिह्वाग्रहा भवेत् ।
संयोज्य हस्तौ देवेशि तर्जन्याऽनामिकां यजेत् ॥३३॥
तद्वद्वामे च सङ्घृष्य योन्याकारेण योजयेत् ।
उपर्यङ्गुष्ठयोगेन योनिमुद्रेयमीरिता ॥ ३४ ॥
अनया मुद्रया देवि त्रैलोक्यं वशमानयेत् ।
परिभ्राम्यानामिकां तु मूर्द्धानं परितः प्रिये ॥३५॥
ब्रह्मरन्ध्रे क्षिपेद्देवि मणिबन्धे न्यसेत्ततः ।
ललाटेऽनामिकां कुर्याच्छोडशार्णां स्मरेत्प्रिये ॥३६॥
त्रैलोक्यमरुणं ध्यायेन्न्यासः सम्मोहनाभिधः ।

पादयोर्जङ्घयोर्जान्वोः कट्योरन्धुनि पृष्ठके ॥ ३७ ॥
नाभौ पार्श्वद्वयोश्चैव स्तनयोरंसयोस्तथा ।
कर्णयोर्ब्रह्मरन्ध्रे च वदने न्धुनिं पार्वति ॥ ३८ ॥
ततः कर्णप्रदेशे तु करवेष्टनयोः क्रमात् ।
संहारोऽयं महान्यासो बीजैः षोडशाभिर्न्यसेत् ॥३९॥
गोलकं च ततः कुर्यात्त्रैलोक्यक्षोभ[1]कारकम् ।
मातृकां विन्यसेत्पश्चाद्गणेशग्रहरूपिणीम् ॥ ४० ॥
नक्षत्रयोगिनीराशिपीठवर्णस्वरूपिणीम् ।
सकलाम्नायविद्याभिरङ्किताां विश्वमातरम् ॥ ४१ ॥
शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे ।
आधारे व्यूहकं यावद्गृहस्या योगिनीर्न्यसेत् ॥४२॥
ब्रह्मरन्ध्रेऽलिके नेत्रश्रुतिघ्राणौष्ठकेषु च ।
दन्तयोरोष्ठ[2]योरूर्द्ध्वे जिह्वायां चोत्तरकर्षके ॥४३॥
पृष्ठे सर्वाङ्गहृदयस्तनकुक्षिषु लिङ्गके ।
श्रीविद्यार्णैर्न्न्यसेद्देवि मन्त्री सर्वसमृद्धये ॥ ४४ ॥
काननाक्षिश्रुतिघ्राणगण्डौष्ठेषु मुखान्तरे ।
नेत्रयोर्वदने वर्णान्न्यसेत्सौभाग्यहेतवे ॥ ४५ ॥
कसीमन्तललाटेषु भ्रूयुगे घ्राणवक्त्रयोः ।

---

(१) 'मोहकारकम्' इति पा० ।
(२) 'दन्तान्तरोद्र्ध्वयोर्देवि' इति पा० ।

करसन्धि[1]नखाग्रेषु षोडशार्णान्क्रमान्न्यसेत् ॥४६॥
शिरोललाटहृद्वक्त्रे जिह्वापत्सन्धिकोटिषु ।
षोडशार्णान् न्यसद्धृत्के स्वरस्थानेषु च क्रमात् ॥४७॥
ललाटगलहृन्नाभिमूला[2]धारादिपञ्चकम् ।
ब्रह्मरन्ध्रे मुखे वह्नि[3]बीजित्रयमथो न्यसेत् ॥ ४८ ॥
आधारे हृदये ब्रह्मरन्ध्रे बीजत्रयं ततः ।
करपादेषु हृदये पञ्चबीजानि विन्यसेत् ॥ ४९ ॥
व्यापकं गोलकं कुर्यान्महासौभाग्यहेतवे ।
श्रीविद्यां हृदये देवि सम्पूर्णां विन्यसेत्सुधीः ॥५०॥
पुष्पैर्वाऽनामया वाऽपि मनसा वा न्यसे[4]दनु ।
एवं विन्यस्तदेहस्तु मुद्राः सन्धारयेत्क्रमात् ॥ ५१ ॥
पूर्वोक्तयोनिमुद्रायाः पृथक् खण्डत्रयं कुरु ।
अङ्गुष्ठाभ्यां कनिष्ठाभ्यां मध्यमाभ्यां क्रमेण तु ॥५२॥
त्रिखण्डा नाम मुद्रेयं त्रिपुराह्वानकर्माणि ।
अनामिकाकनिष्ठाभ्यां मध्यमे रोधयेत्ततः ॥ ५३ ॥
[5]अङ्गुष्ठावञ्जलौ लग्नौ दण्डवत्तर्जनीद्वयम् ।

---

(१) 'करसन्धिषु साग्रेषु' इति पा० ।
(२) 'मूलाधारेषु पञ्चकम्' इति पा० ।
(३) 'बस्तिबीजत्रय'मिति पा० ।
(४) 'न्यसेदणुम्' इति पा० ।
(५) 'अङ्गुष्ठावनुजालग्नौ' इति पा० ।

क्षोभणीयं महामुद्रा द्रावणी तु निगद्यते ॥ ५४ ॥
एतस्या एव मुद्राया मध्यमे तर्जनीयुते ।
सर्वविद्राविणी नाम द्वितीया परिकीर्तिता ॥ ५५ ॥
एतस्या एव मुद्राया तर्जनीमध्यमायुतम् ।
अङ्कुशाकाररूपेण योजयेत्परमेश्वरि ॥ ५६ ॥
त्रैलोक्याकर्षणी मुद्रा तृतीया परिकीर्तिता ।
मुकुटाकृतिकरौ कुर्यात्तर्जन्यावङ्कुशाकृती ॥ ५७ ॥
परस्परं क्रमेणान्यमध्यमे तदधोगते ।
क्रमेणानेन मनुवित् कनिष्ठानामिकाद्वयम् ॥ ५८ ॥
संयोज्य घर्षयेत्सर्वा अङ्गुष्ठावग्रदेशगौ ।
सर्वा वशकरी मुद्रा चतुर्थी परमेश्वरी ॥ ५९ ॥
सम्मुखौ तु करौ योज्यौ मध्यमागर्भगेऽनुजे ।
तर्जनीभ्यां बहिर्युक्ते अनामे सरले कुरु ॥ ६० ॥
मध्यमानखदेशे तु ततोऽङ्गुष्ठौ तु दण्डवत् ।
उन्मनी नाम मुद्रा तु पञ्चमी परिकीर्तिता ॥ ६१ ॥
क्रमेण पञ्च बाणास्तु मनवः परिकीर्तिताः ।
एतस्या एव मुद्रायास्तर्जन्यौ मध्यमानुजे ॥ ६२ ॥
कुर्यान्महाङ्कुशाकारौ मुद्रेयं तु महाङ्कुशा ।
अङ्कुशाख्यमहाबीजं मनुरस्याः प्रकीर्तितः ॥ ६३ ॥
वामदक्षिणबाहौ तु दक्षिणं सव्यहस्तगम् ।

वाहुं कुर्यात्ततो देवि हस्तं सङ्घर्षयेत्क्रमात् ॥ ६४ ॥
कनिष्ठानामिकाद्वन्द्वं मध्यमापृष्ठगं ततः ।
तर्जनीमध्यगं कुर्यादुभयत्र महेश्वरि ॥ ६५ ॥
अङ्गुष्ठौ सरलौ कृत्वा पार्थिवे योजयेदिमाम् ।
खेचरीयं महामुद्रा त्रैलोक्यक्षोभकारिणी ॥ ६६ ॥
विजयाद्यं महाबीजं मनुरस्याः प्रकीर्तितः ।
ऐषा समयमुद्रैव सर्वासां परिकीर्तिता ॥ ६७ ॥
परिवर्त्त्य[२] करौ देवि त्वर्द्धचन्द्राकृती ततः ।
तर्जन्याङ्गुष्ठयुगलं युगपत्कारयेदधः ॥ ६८ ॥
अधः कनिष्ठावेष्टत्वे मध्यमे स्वमुयोजयेत् ।
अनामिके च कुटिले सर्वाधस्ता नियोजयेत् ॥६९॥
वीजमुद्रेयमाख्याता मनुरस्या हसो मिति ।
पूर्वोक्तयोनिमुद्रा तु नवमी परिकीर्तिता ॥ ७० ॥
शक्तिवृन्दे स्फुरन्तीयं तस्मात्साधरणी भवेत् ।
वाग्भवं मनुरेतस्या अतो विश्वस्य मातृका ॥ ७१ ॥

इति श्रीदक्षिणामूर्तिसंहितायां यजनन्यासमुद्राविवरणं नाम सप्तपञ्चाशः पटलः ॥ ५७ ॥

---

(१) इदमर्द्धं पुस्तकान्तरेनास्ति ।
(२) 'परिस्वष्टौ' इति पा० ।

## अथाष्टपञ्चाशःपटलः ।

ईश्वर उवाच—

श्रीखण्डरक्तश्रीखण्डश्रीपर्णीसम्भवे पटे ।
चक्रं संस्थापयेद्देवि नान्यत्र परमेश्वरि ॥ १ ॥
एवं विन्यस्तदेहः सन्ध्यायेद्ब्रह्माण्डमण्डलम् ।
क्षित्यम्बुपावकाकाशवह्निरूपप्रकाशकम् ॥ २ ॥
चतुरश्रं च कोदण्डं त्रिकोणं तत्पुटे मुखम् ।
निरालम्बमितिख्यातमेतद्धै मेरुमण्डलम् ॥ ३ ॥
अस्योद्‌र्ध्वे व्यापकं चक्रं वाक्षट्पदविजृम्भितम् ।
लीना वाग्वस्तुनिर्देशादपरा योगिषु स्मृता ॥ ४ ॥
परा श्रीशाम्भवज्ञाने वानस्पत्येषु मध्यमा ।
सर्वजन्तुषु पश्यन्ती वैखरी ज्ञानयोनिषु ॥ ५ ॥
एवं वाक्पदसम्पन्नसहस्रदलनीरजम् ।
एतस्योद्‌र्ध्वे परं चक्रं परपीयूषमन्दिरम् ॥ ६ ॥
चतुरस्रं ह्यष्टपत्रं चतुःषष्टिदलं शुभम् ।
शतपत्रं सहस्रारायुतारं लक्षपत्रकम् ॥ ७ ॥
कोटिपत्रं सुशोभाढ्यं दीप्यमानं नभस्तले ।
तत्कर्णिकापीठमध्ये संस्मरेच्चक्रनायिकाम् ॥ ८ ॥
महाषडध्वजननं स्फुरन्तं सर्वतोमुखम् ।

(१) 'चित्स्वरूपप्रकाशकम्' इतिपा० ।

षडध्वरूपमधुना शृणु योगेशि साम्प्रतम् ॥ ९ ॥
पदाध्वा चक्रपत्रेषु भुवनाध्वा त्रिसन्धिषु ।
वर्णाध्वा मातृकापीठे सर्वमन्त्रविजृम्भिते ॥ १० ॥
षट्त्रिंशत्तत्त्वखचितं[1] चक्रं मूलार्णरूपतः[2] ।
पञ्चसिंहासनोन्नद्धा कला श्रीचक्रशासनात्[3] ॥ ११ ॥
नवधा तच्च भवति[4] तथान्त्यपरया युता ।
षोड़शार्णस्वरूपा च चक्रं व्याप्य विजृम्भते ॥ १२ ॥
मन्त्राध्वेति तदा ख्यातो नीरजायतलोचने ।
एवं षडध्वसञ्चारि श्रीचक्रं परिचिन्तयेत् ॥ १३ ॥
कर्णिकायां परं वस्तु ततश्चैतन्यमक्षरम् ।
तत आत्मपदं चैव बैन्दवं स्फुरणं ततः ॥ १४ ॥
ततः स्वरूपं विमलं ततः सत्त्वादिसम्भवः
चैतन्याकाशपीठं तु स्वात्मकत्वं[5] तु शासनात् ॥१५॥
स्फुरणाद्धल्लरीपीठं[6] सुधापठिं तु बैन्दवात् ।
स्वरूपाद्दलपीठं तु तत्त्वाद्धिश्वं प्रकीर्तितम् ॥ १६ ॥

(१) 'भरितं' इतिपा०

(२) 'मूलानुरूपतः' इतिपा० ।

(३) 'कलाध्वा चक्रशासनः' इतिपा० ।

(४) 'चक्रभरिता' इतिपा० ।

(५) 'स्वात्मकात्पञ्चशासनम्' इतिपा० ।

(६) 'वल्लभापीठं' इतिपा० ।

बिन्दुस्थाने मुखं कृत्वा तस्याधस्तात्कुचद्वयम् ।
बिन्दुद्वयं तदधो हकारोदूर्ध्वे ईकारः कुचद्वयादधः ॥१७॥
श्रीविद्यापूजनस्थाने चक्रराजे महेश्वरि ।
महाकोशेश्वरीवृन्दमण्डितासनसंस्थिता ॥ १८ ॥
सर्वसौभाग्यजननीपादुकां पूजयामि च ।
इत्युच्चार्य परंज्योतिःकोशाम्बां पूजयेत्सुधीः ॥ १९ ॥
अनेनैव प्रकारेण पूजयेत्पञ्च सुन्दरीः ।
एतत्सर्वात्मकं वस्तु संलीनं परवस्तुनि ॥ २० ॥
तत्सर्वं सात्मकं वृत्तिः सैव सौभाग्यसुन्दरी ।
बिन्दुत्रयसमायोगात्त्रिबिन्दौ त्रिपुरा स्थिता ॥ २१ ॥
बिन्दुं सङ्कल्पयेद्वक्त्रं तस्याधस्तात्कुचद्वयम् ।
तदधः सपरार्धं च चिन्तयेत्तदधोमुखम् ॥ २२ ॥
एवं कामकलारूपं साक्षादक्षररूपिणी ।
बिन्दुत्रयार्द्ध मात्राभिः केवलं विश्वमातृका ॥ २३ ॥
तत्तस्मात्कारणात् देवि त्रिपुराशक्तिरुच्यते ।
अन्यासां त्रैपुरं बिन्दुत्रयं नास्त्येव शाश्वतम् ॥ २४ ॥
तदिच्छया भवेत्सृष्टिर्लयं तत्रैव गच्छति ।
सैव देवी महेशानी स्वात्मानमिति चिन्तयेत् ॥२५॥
अजान्तकमतङ्गाख्यभापीठोपरि संस्थिते ।

---

( १ ) 'पूजयेत्पञ्चपञ्चकम्' । इतिपा०

तिथिसंख्यफणाहीरमध्यमौलिसरोरुहे ॥ २६ ॥
तत्रस्थे बैन्दवे पीठे तत्र नित्याकलाम्बुजे ।
तत्र कामेश्वरीपीठे निषण्णां तत्सधर्मिणीम् ॥ २७ ॥
आज्ञालोकमयेशानीं ब्रह्मविष्णवीशसाक्षिणीम् ।
अकारादिक्षकारान्तवर्णावयवसुन्दरीम् ॥ २८ ॥
मूलादिब्रह्मरन्ध्रान्ते बिसतन्तुस्वरूपिणीम् ।
उद्यद्भास्वत्समाभासां जपाकुसुमसन्निभाम् ॥ २९ ॥
सद्यः सन्तप्तहेमाभां दाडिमीकुसुमोज्ज्वलाम् ।
सुगन्धोद्दामपुष्पस्रक्पूर्णधम्मिल्लराजिताम् ॥ ३० ॥
तनुकेतकसंराजन्नीलभ्रमरकुन्तलाम् ।
भङ्गरेखास्फुरन्मुक्तामाणिक्यतिलकोज्ज्वलाम् ॥३१॥
स्फुरद्रत्नावलीरम्यां मुकुटोज्ज्वलकिङ्किणीम् ।
अलक्तकस्फुरच्चन्द्रवदनां बिन्दुमाधुरीम् ॥ ३२ ॥
राजच्चन्द्रकलास्फूर्तितिलकां चापसद्भ्रुवम् ।
कर्णचुम्बिस्फुरन्नीललोलाक्षिक्षेपसुन्दरीम् ॥ ३३ ॥
हीरमुक्तावलीराजत्स्वर्णताटङ्कराजिताम् ।
कर्णभूषणतेजोभिः कपोलस्थलमञ्जरीम् ॥ ३४ ॥
मुखचन्द्रोज्ज्वलच्छुक्राकारमौक्तिकनासिकाम् ।
स्मितमाधुर्यविजितब्रह्मविद्यारसप्रभाम् ॥ ३५ ॥
रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ।

कराम्बुजनखज्योत्स्नावितानितनभस्तलाम् ॥ ३६ ॥
सुवृत्तनिबिडोत्तुङ्गकुचभागशशिप्रभाम् ।
नवमुक्तामहाहारपदकोन्नतवक्षसम् ॥ ३७ ॥
शातोदरीं निम्ननाभिक्षाममध्यमसुन्दरीम् ।
अनर्घ्यरत्नघटितमेखलालग्नकिङ्किणीम् ॥ ३८ ॥
नितम्बबिम्बसुभगां रोमराजिविराजिताम् ।
रक्तांशुकस्फुरत्तेजोव्याप्तत्रैलोक्यमण्डलीम् ॥ ३९ ॥
दिव्यकञ्चुकसंराजद्रत्नचित्रविचित्रिताम् ।
कदलीललितस्तम्भसूक्ष्मोदरविराजिताम् ।
नवरत्नस्फुरत्तेजोमञ्जरीव्याप्तदेवताम् ॥ ४० ॥
ब्रह्मविष्णुमहेशानस्फुरन्मौलिपदाम्बुजाम् ।
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम् ॥ ४१ ॥
प्रवालवल्लीघटितपाशक्षौमगुणान्विताम् ।
द्वितीयाचन्द्रलेखाङ्कसृणिमाकर्षणक्षमाम् ॥ ४२ ॥
सद्विद्याभ्रमरीभूतगुणमिक्षुशरासनाम् ।
कमलाकारसंराजत्पञ्चबाणांश्च बिभ्रतीम् ॥ ४३ ॥
महामृगमदोदारकुङ्कुमारुणविग्रहाम् ।
सर्वाभरणशोभाढ्यां सर्वालङ्कारभूषिताम् ॥ ४४ ॥
सर्वदेवमयीं देवीं सर्वमन्त्रमयीं पराम् ।
सर्ववर्णमयीं देवीं सर्वयन्त्रमयीं पराम् ॥ ४५ ॥

सर्वतीर्थमयीं देवीं सर्वशास्त्रमयीं प्रिये ।
सर्वदेवमयीं देवीं सर्वाचारस्वरूपिणीम् ॥ ४६ ॥
सर्वसौभाग्यजननीं सर्वसौभाग्यसुन्दरीम् ।
एवं ध्यायन् महादेवीं कदम्बवनमध्यगाम् ॥ ४७ ॥
वहन्नाडिपुटाद्वायोर्निःसृतां चिन्तयेत्तथा ।
कामेश्वरीं शिवस्याङ्के स्थापयेत्कुलसुन्दरि ॥ ४८ ॥
विद्ययाह्वानरूपिण्या मुद्रया च तथा प्रिये ।
मुद्राः सन्दर्शयेद्विद्वांस्तर्पणं च त्रिधा यजेत् ॥४९॥
सर्वोपचारैराराध्य मानसैः प्रकटैः शुभैः ।
धूपदीपनिवेद्यान्तैः पुनर्मुद्राः प्रदर्शयेत् ॥ ५० ॥
पुनः सन्तर्प्य देवेशीं तिथिनित्यां प्रपूजयेत् ।
एतस्मिन्समये देवि तत्तत्तिथिमयीं यजेत् ॥ ५१॥
प्रतिपत्पौर्णमास्यन्तमेकैकं पूजयेत्तु यः ।
सौभाग्यं लभते मन्त्री महदैश्वर्यमाप्नुयात् ॥ ५२ ॥
एकादिवृद्ध्या हान्या च दर्शान्तं क्रमतो यजेत् ।
विभाव्य च महात्र्यस्रं स्वरैः पञ्चदशात्मकैः ॥५३॥
पञ्चपञ्चविभेदेन सर्वान्त्यं मध्यमं यजेत् ।
मध्ये देवीं यजेद्देवि महानित्यां प्रपूजयेत् ॥ ५४ ॥
कामेश्वर्यादिका नित्या विचित्रान्ताः क्रमाद्यजेत् ।

---

( १ ) 'वहन्नाडीपुटद्वारेनिर्गतां चिन्तयेत्ततः' । इतिपा० ।

विमलाजयिनीमध्ये पूजयेद् गुरुमण्डलम् ॥ ५५ ॥
पराख्या दिव्यगुरवः सिद्धा देवि परावराः ।
अपरा मानवा ज्ञेया मुनिवेदाष्टसंख्यया ॥ ५६ ॥
आनन्दनाथशब्दान्ताः पुरुषाः परिकीर्तिताः ।
अम्बान्ता गुरवो ज्ञेयाः स्त्रीलिङ्गाः परमेश्वरि ॥५७॥
कामराजस्य गुरवः कथ्यन्ते शृणु सुन्दरि ।
परप्रकाशसंज्ञश्च ततः परशिवो गुरुः ॥ ५८ ॥
परशक्तिश्च कौलेशः शुक्ला देव्यम्बिका तथा ।
कुलेश्वरस्तथा देवि कामेश्वर्यम्बिका गुरुः ॥ ५९ ॥
अथ योगस्तथा क्लिन्नः समयः सहजस्तथा ।
गगनो विश्वविमलौ मदनो भुवनो गुरुः ॥ ६० ॥
लीलात्मकाप्रिया देवि क्रमेण परिकीर्तिताः ।
लोपामुद्रागस्त्ययोश्च पारम्पर्यमयो भवेत् ॥ ६१ ॥
परमाद्यः शिवः पश्चात्कामेश्वर्यम्बिका ततः ।
दिव्यौघाश्च महौघाश्च सर्वे च गुरवः क्रमात् ॥६२॥
प्रज्ञादेवीप्रकाशस्तु चतुष्कं कथ्यते शृणु ।
दिव्याश्चित्रश्च कैवल्यो देव्यम्बा च महोदयः ॥६३॥
चिद्धिश्वशक्तीश्वरकाः कमलाश्च मनोहराः ।
पर आत्मा गुरुद्वन्द्वं प्रतिभोऽष्टौ तु मानवे ॥६४॥
अन्यासां सर्वविद्यानां समाना गुरवः क्रमात् ।

अथो परप्रकाशश्च परादिविमृशस्तथा ॥ ६५ ॥
तृतीया परमेशानि कामेश्वर्यम्बिका ततः ।
मोक्षं चामृतसंज्ञश्च पुरुषोऽघोरएव च ॥ ६६ ॥
अथ वामः सद्गुरुश्च सिद्धौघश्चोत्तमः क्रमात् ।
उद्भवः पारमश्चैव सर्वज्ञः स्वस्थ एव च ॥ ६७ ॥
सिद्धस्तथा च गोविन्दः शङ्करो मानवौघकः ।
आद्यत्रयावसाने तु स्वगुरुत्रितयं भवेत् ॥ ६८ ॥
पद द्वाद्वश संख्याता गुरवस्तु भवन्ति हि ।
मानवौघाष्टकान्ते तु पुष्पं सङ्कोचयेत्तदा ॥ ६९ ॥
गुरुत्रयं तथा योज्यमन्यथा नष्टसन्ततिः ।
यातो मन्त्री ततो देवि पङ्क्त्यर्हो न भवत्यसौ ॥७०॥
अन्यथा गुरुसङ्कोचो न कर्तव्यः कदाचन ।
पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ॥ ७१ ॥
तेषां समयलोपेन किं कुर्वन्ति मरीचयः ।
गुरुं विना क्रमं यस्तु कुरुते परमेश्वरि ॥ ७२ ॥
महाहानिस्तस्य देवि जायते नात्र संशयः ।
अलित्रयेण गुरवः संपूज्याः सिद्धिहेतवे ॥ ७३ ॥
गुरुमन्त्रेण नाम्नाऽपि निजं संपूजयेद् गुरुम् ॥७४॥

इति श्रीदक्षिणामूर्तिसंहितायां ध्यानादियजनविधि-
रष्टपञ्चाशः पटलः ॥ ५८ ॥

## अथोनषष्टितमः पटलः ।

ईश्वर उवाच—

अथ वक्ष्ये महेशानि श्रीविद्याक्रममुत्तमम् ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ १ ॥
स्वस्वमुद्राः क्रमेणैव पूजयेन्मनुवित्तमः ।
भूबिम्बं षोडशारं च वसुपत्रं क्रमेण च ॥ २ ॥
सृष्टिचक्रं भवेदत्र पूजनं कथ्यते प्रिये ।
श्रीः परिज्योतिराद्याश्च सर्वाः सम्पूजयेत्क्रमात् ॥ ३ ॥
मन्वस्रं दशकोणं च द्वितीयं दशकोणकम् ।
स्थिति वक्रे पूजनं च विभेदेन यजेत्तथा ॥ ४ ॥
अष्टकोणं त्रिकोणं च बैन्दवं संहृतिर्भवेत् ।
तृतीयाः सकलाः पूज्या अनाख्यं सकलं भवेत् ॥५॥
तुर्यविद्यास्तु सकलाः पूजयेत्क्रमतः सुधीः ।
अनेनैव प्रकारेण विद्यावृन्दं प्रपूजयेत् ॥ ६ ॥
श्रीकोशासिंहासनगं तथा कल्पलतात्मकम् ।
तथा रत्नात्मकं देवि चतुरायतनात्मकम् ॥ ७ ॥
चतुरन्वयगम्भीरं सर्वं सम्पूजयेत्सुधीः ।
त्रैलोक्यमोहने चक्रे पञ्चाशद्वर्णविग्रहे ॥ ८ ॥
प्रकटास्तत्र सम्पूज्याः सिद्धयो दश सुन्दरि ।
सद्यः सन्तप्तहेमाभाः पाशाङ्कुशधराः प्रिये ॥ ९ ॥

महाभाण्डाररत्नानि सस्रुवर्णानि वै निधीन् ।
प्रयच्छन्त्यः साधकेभ्यः पद्महस्तास्तु पूजयेत् ॥१०॥
अणिमा लघिमा सिद्धिर्महिमेशित्वरूपिणी ।
वशित्वसिद्धिः प्राकाम्या भुक्तिरिच्छाऽष्टमी भवेत् ॥११॥
प्राप्तिसिद्धिः सर्वकामाः सिद्धयः प्रकटा यजेत् ।
द्वारदक्षिणभागेषु तथा कोणेषु च क्रमात् ॥ १२ ॥
अध ऊर्द्ध्वे क्रमात्पूज्याः पश्चिमादि प्रदक्षिणम् ।
ब्राह्मी माहेश्वरी चैव तथेन्द्राणी तृतीयके ॥ १३ ॥
कौमारी वैष्णवी चैव षष्ठी वाराहिका भवेत् ।
चामुण्डा च तथा लक्ष्मीरपरेण च भागशः ॥ १४ ॥
पाशाङ्कुशधराः सर्वाः क्रमेण दधतीः स्मरेत् ।
विद्यां शूलं च वज्रं च शक्तिं चक्रं गदां ततः ॥१५॥
वैर्यन्त्रमालिकां पद्मं क्रमेण परमेश्वरि ।
सर्वाभरणसम्पन्नाः संस्मरेत्सिद्धिहेतवे ॥ १६ ॥
सर्वाद्या क्षोभिणी चैव द्राविण्याकर्षणी तथा ।
वश्योन्मादाङ्कुशाख्या च तथा मुद्रा तु खेचरी ॥१७॥
बीजयोनिस्त्रिखण्डा च पूर्वपश्चिमभागतः ।
पद्मरागप्रतीकाशाः सिन्दूरतिलकान्विताः ॥ १८ ॥
रक्तवस्त्रपरीधाना रक्तमालाविभूषिताः ।
स्वस्वमुद्राङ्किताः सर्वाः पाशाङ्कुशलसत्कराः ॥ १९ ॥

पूज्या मुद्राः प्रयत्नेन स्वेष्टसंसिद्धिहेतवे ।
पश्चिमादिक्रमेणैव प्रकटाश्चतुरस्रके ॥ २० ॥
सर्वाशापूरके चक्रे कलास्वरविजृम्भिते ।
पश्चिमादिविलोमेन गुप्ताः सम्पूजयेत्क्रमात् ॥ २१ ॥
कामादिकर्षिणी नित्या बुध्याकर्षिणिका तथा ।
अहङ्काराकर्षिणी च शब्दाकर्षिणिका तथा ॥ २२ ॥
स्पर्शाकर्षणिकां तद्वद्रूपाकर्षणिकां ततः ।
रसाकर्षणिकां देवि गन्धाकर्षणिकां ततः ॥ २३ ॥
चित्ताकर्षणिकां तद्वद्धैर्याकर्षणिकां प्रिये ।
नामाकर्षिणिकां चैव बीजाकर्षिणिकां तथा ॥ २४ ॥
अमृताकर्षणीं चैव स्मृत्याकर्षिणिका प्रिये ।
शरीराकर्षणीं नित्यामात्माकर्षणिकां ततः ॥ २५ ॥
एता नित्याकला देवि चन्द्रमण्डलमध्यगाः ।
स्वरलग्नाः स्मरेन्नित्यं स्रवत्पीयूषवर्षिणीः ॥ २६ ॥
पाशाङ्कुशसुधापूर्णकाश्मीरघटदानदाः ।
सर्वसङ्क्षोभणे चक्रे कादिलक्षान्तवर्गिणी ॥ २७ ॥
देव्यो गुप्ततराः पूज्या बन्धूककुसुमप्रभाः ।
पाशाङ्कुशस्फुरन्नीलनीलोत्पलकराः स्मरेत् ॥ २८ ॥
पूर्वादिषु चतुर्दिक्षु कोणेष्वग्न्यादिषु क्रमात् ।
अनङ्गकुसुमा चैव तथा चानङ्गमेखला ॥ २९ ॥

तथा चानङ्गमदना अनङ्गमदनातुरा ।
अनङ्गरेखा च तथा वेगिन्यनङ्गपूर्विका ॥ ३० ॥
अनङ्गाङ्कुशा चानङ्गमालिनी परमेश्वरि ।
महासौभाग्यदे चक्रे कचटवर्णविराजिते ॥ ३१ ॥
सम्प्रदायाख्ययोगिन्यः सर्वाभरणभूषिताः ।
इन्द्रगोपनिभाः सर्वाः सगर्वोन्मत्तयौवनाः ॥ ३२ ॥
पाशाङ्कुशौ दर्पणं च पानपात्रं सुधामयम् ।
बिभ्रत्यः सर्वसुभगाः पश्चिमादिविलोमतः ॥ ३३ ॥
शक्तीः प्रपूजयेद्देवि सम्प्रदायेन सिद्धये ।
सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा ॥ ३४ ॥
सर्वाकर्षणिका शक्तिः सर्वाल्हादकरी प्रिये ।
सर्वसंमोहिनी शक्तिः सर्वस्तम्भनकारिणी ॥ ३५ ॥
सर्वजृम्भाणिका नाम शक्तिः सर्ववशङ्करी ।
सर्वानुरञ्जिनी शक्तिःसर्वोन्मादनकारिणी ॥ ३६ ॥
सर्वार्थसाधिका शक्तिः सर्वसम्पत्तिरूपिणी ।
सर्वमन्त्रमयी शक्तिः सर्वद्वन्द्वक्षयङ्करी ॥ ३७ ॥
सर्वार्थसाधके चक्रे नभवर्णविशोभिते ।
जपाकुसुमसङ्काशाःस्फुरन्मणिविभूषिताः ॥ ३८ ॥
महासौभाग्यगम्भीरा पीनवृत्तघनस्तनीः ।
रत्नपेटीविनिक्षिप्तान् साधकेप्सितभूषणान् ॥ ३९ ॥

नानारत्नमयान् दिव्यान् ददतीर्हर्षितानना[1]ः ।
पाशाङ्कुशौ च दधतीः संस्मरेत्कुलयोगिनीः ॥ ४० ॥
पश्चिमादिविलोमेन पूजयेत्सर्वसिद्धिदाः ।
सर्वसिद्धिप्रदा देवी सर्वसम्पत्प्रदा तथा ॥ ४१ ॥
सर्वप्रियङ्करी चैव सर्वमङ्गलकारिणी ।
सर्वकामप्रदा देवी सर्वदुःखविमोचनी ॥ ४२ ॥
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी[2] ।
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी ॥ ४३ ॥
सर्वरक्षाकरे चक्रे मक्षवर्णविभूषिते ।
पश्चिमादिविलोमेन निगर्भा योगिनीर्यजेत् ॥ ४४ ॥
उद्यद्भानुसहस्राभा मुक्तालङ्कारभूषिताः ।
पाशटङ्कायुधज्ञानमुद्रावरलसत्कराः ॥ ४५ ॥
देवीःप्रपूजयेदेता यथेप्सितफलप्रदाः ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा ॥ ४६ ॥
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ।
सर्वाधारस्वरूपा च सर्वपापहरा तथा ॥ ४७ ॥
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ।

---

( १ ) 'हसिताननाः' इतिपा०
( २ ) 'निवारिणी' इतिपा०

तथैव हि महादेवी सर्वेप्सितफलप्रदा ॥ ४८ ॥
सर्वरोगहरे चक्रे वर्गाष्टकविजृम्भिते ।
पश्चिमादिविलोमेन रहस्या योगिनीर्यजेत् ॥ ४९ ॥
श्रीपीठं परितोऽधस्ताद्दाडिमीकुसुमोपमाः ।
रक्तवस्त्रपरीधाना रक्तगन्धानुलेपनाः ॥ ५० ॥
रक्तपुष्पाक्षतैः सम्यक् पूजयेत्सर्वसिद्धिदाः ।
नानाभरणगम्भीरा पञ्चबाणधनुर्धराः ॥ ५१ ॥
पुस्तकं वरदानं च दधतीर्वर्गसंस्थिताः ।
वर्णाष्टकमहावर्णबिन्दुनादाङ्किता लिखेत् ॥ ५२ ॥
अवर्गान्ते रेफवक्ष्मावामकर्णेन्दुबिन्दुमत् ।
देवी वाग्देवता पूज्या वशिनी नाम सुन्दरि ॥ ५३ ॥
कवर्गान्ते कलहरीं परां कामेश्वरीं यजेत्[२] ।
चवर्गान्ते नवक्ष्माढ्यं वामनेत्रं शशी समम् ॥ ५४ ॥
अनेन मोदिनी पूज्या टवर्गान्ते ततः परम् ।
वायुक्ष्मावामकर्णेन्दुनादवद्विमलां यजेत् ॥ ५५ ॥
तवर्गान्ते च कालाग्निवामाक्षीन्दुकलात्मिकाम् ।
अरुणां पूजयेद्देवि पवर्गान्ते ऽथ कथ्यते ॥ ५६ ॥

---

( १ ) 'सर्वेप्सितार्थफलदा दशमी परमेश्वरी' । इतिपा०
( २ ) 'लिखेत्' इतिपाठान्तरम् ।

व्योमजीवमहीनीरवायुमर्धीशभूषितम् ।
अनेन जयिनी पूज्या यबर्गान्ते ऽथ संलिखेत् ॥५७॥
इमरेफकालपवनप्राणजीवेन पूजयेत् ।
सर्वेश्वरीं, शवर्गान्ते क्षमावह्नीशबिन्दुमत् ॥ ५८ ॥
अनेन कौलिनीं देवीं पूजयेदष्टमीं बुधः ।
अष्टकान्ते महेशानि एता वाग्देवता यजेत् ॥ ५९ ॥
सर्वसिद्धिप्रदे चक्रे त्वकथैश्च महाक्षरैः ।
त्रिरेखासर्वशोभाढ्ये समस्तानुविजृम्भिते ॥ ६० ॥
परापररहस्याख्या योगिनीः पूजयेत्क्रमात् ।
पश्चिमादिक्रमेणैव युग्मयुग्माविभेदतः ॥ ६१ ॥
कामेशस्य च कामेश्याः बाणाः साधारणाः प्रिये ।
सतुर्यं तद्द्वितीयं च बिन्दुनादाङ्कितं क्रमात् ॥६२॥
कामेश्वरस्य कामेश्याश्चापयुग्मं यजेत् प्रिये ।
अनन्तो बिन्दुनादाढ्यो हृल्लेखापाशयुग्मकम् ॥६३॥
कामेश्वरस्य कामेश्याः क्रमेण परमेश्वरि ।
अङ्कुशस्तु समानः स्यादुभयोः पूजयेत्सुधीः ॥ ६४॥
चतुर्दिक्षु त्रिशोभाढ्या यौवनोन्मत्तविग्रहाः ।
रक्तविद्युल्लताकारा उद्दामकुसुमान्विताः ॥ ६५ ॥

---

( १ ) 'कश्यते' इतिपाठा० ।
( २ ) 'श्रवणान्तेन' इतिपाठा० ।

नवरत्नविशोभाढ्याः स्वस्वायुधधराः क्रमात् ।
जम्भमोहवशस्तम्भपदमन्त्रान्विताः शुभाः ॥ ६६ ॥
अङ्गावरणबाह्ये तु आयुधाष्टकमर्चयेत् ।
कोणत्रयेषु सम्पूज्यास्तिस्रः कूटत्रयान्विताः ॥ ६७ ॥
कामेश्वरी च वज्रेशी तृतीया भगमालिनी ।
कामेश्वरी शुक्लवर्णा शुक्लमाल्यानुलेपना ॥६८॥
मुक्ताफलस्फुरद्भूषा नानाभरणभूषिता ।
पुस्तकं चाक्षसूत्रं च वरदं चाभयं क्रमात् ॥ ६९ ॥
दधती चाग्रतः पूज्या रुद्रशक्तिः प्रकीर्तिता ।
वज्रेश्वरी कुङ्कुमाभा स्फुरद्रत्नविभूषिता ॥ ७० ॥
बालार्कवसना नीलकर्णचुंबितलोचना ।
इक्षुकोदण्डपुष्पेषुवरदाभयशोभिता ॥ ७१ ॥
वज्रेश्वरीदक्षभागे विष्णुशक्तिर्महेश्वरी ।
उत्तरे भगमाला च सद्यः सन्तप्तहेमभा ॥ ७२ ॥
अनर्घ्यरत्नरचितभूषणा परमेश्वरी ।
पाशाङ्कुशज्ञानमुद्रावराभयकराम्बुजा ॥ ७३ ॥
ब्रह्मशक्तिर्महेशानि तापत्रयनिकृन्तनी ।
सर्वानन्दमये नादरूपे शब्दातिगोचरे ॥ ७४ ॥
परापररहस्याख्या योगिनीरतिपूर्विकाः ।

---

( १ ) 'कोश' इतिपाठान्तरम् । ( २ ) 'वरदान' इतिपाठान्तरम् ।

त्रिकूटया तु सम्पूज्य महात्रिपुरसुन्दरीम् ॥
श्रीविद्यां पूजयेद्देवि चिन्मयीं ब्रह्मरूपिणीम् ॥ ७५ ॥
तर्पणानि पुनर्दद्यात् गन्धपुष्पाक्षतैर्यजेत् ।
मानसैः प्रकटैर्देवीं पूजयेद्बहुभिः प्रिये ॥ ७६ ॥
मुद्राः सन्दर्शयेन्मन्त्री बन्धूककुसुमप्रभाः ।
नानालङ्कारसुभगास्त्रैलोक्यवशकारिणीः ॥ ७७ ॥
स्वस्वमुद्राकराः सर्वाः श्रीविद्यासम्मुखाः स्मरेत् ।
प्रतिचक्रेतु मुद्रास्तु क्रमाच्चक्रेश्वरीं यजेत् ॥ ७८ ॥
ततश्च[1] पश्चान्मध्ये तु वाह्यपूजागतः प्रिये ।
त्रिपुरा स्फाटिकाभासा मुक्तारत्नविभूषिता ॥ ७९ ॥
पुस्तकं चाक्षमालां च कलशं पद्ममुत्तमम् ।
विभ्रती[2] सिद्धये चिन्त्या महापापविनाशिनी ॥८०॥
त्रिपुरेशीं पूर्वरूपां सुन्दरीं कुसुमप्रभाम् ।
सर्वालङ्कारसम्पन्नां पुस्तकं चाक्षमालिकाम् ॥ ८१ ॥
वराभयौ च दधतीं सामर्थ्यहासिताननाम् ।
अनया सदृशी देवी ध्येया त्रिपुरवासिनी ॥ ८२ ॥
आरक्तलोचना प्रान्ते महामदविघूर्णिता ।
त्रिपुराश्रीर्महेशानि पीनवृत्तघनस्तनी ॥ ८३ ॥
उद्यद्भास्वत्सहस्राभा दिव्यालङ्कारमण्डिता ।

१ 'ततश्चक्रस्य मध्ये तु ह्याद्यपूजागतः प्रिये' इति पा० ।
२ दधतीं चिन्तयेन्नित्यां महापापविनाशिनीम् इति पा० ।

पुस्तकं जपमालाञ्च वरदं चाभयं करैः ॥ ८४ ॥
दधती सकलानन्दा मालिनी कथ्यतेऽधुना[1]।
इन्द्रगोपप्रभा देवी पाशाङ्कुशकपालिनी ॥ ८५ ॥
महाभीतिहरा देवी साधकानां क्षणादियम्।
सिद्धां[2] च परमेशानीं ध्यायेद्धिसंविकासिनीम्[3] ॥८६॥
सम्पत्प्रदा भैरवी च महासिद्धिप्रदायिनी।
क्रमेण सिद्धिसहिताः प्रतिचक्राधिदेवताः ॥ ८७ ॥
अत्युपह्वरमेवेदं ज्ञात्वा चक्रं समर्चयेत्।
पादुकां पूजयामीति नमस्कारस्तथा भवेत् ॥ ८८ ॥
स्वाहा होमे तर्पणे तु तर्पयामीति संस्मरेत्।
अथ वा रश्मयः सर्वा देवीरुपेण चिन्तयेत् ॥ ८९ ॥
श्रीचक्रे परमेशानि स्वतन्त्रे स्वस्वसन्निभाः।
गोपितव्यं त्वया भद्रे स्वयोनिरिव पार्वति ॥ ९० ॥

इति श्रीदक्षिणामूर्तिसहितायां विद्यायजनविधि-
र्नामोनषष्टितमः पटलः ॥ ५९ ॥

---

१ 'पुनः' इति पा०।

२ 'सिद्धाम्बां' इति पा०।

३ 'ध्यायेद्विषविनाशिनीम्' इति पा०।

## अथ षष्टितमः पटलः ।

ईश्वर उवाच—

नैवेद्यं षड्रसोपेतं कामधेनुपवित्रितम् ।
दत्वा कर्पूरसहितं ताम्बूलं परशक्तये ॥ १ ॥
नित्यहोमं प्रकुर्वीत पूर्वोक्तविधिना प्रिये ।
यथाशक्ति जपं कुर्यात्स्तुतिं च परमेश्वरि ॥ २ ॥
आदिश्लोकद्वयेनापि नत्वा सौभाग्यदेवताम् ।
सुवर्णरौप्यकांस्यादिपात्रे वसुदलं लिखेत् ॥ ३ ॥
गन्धेन चरुकं मध्ये मुद्रां वा तत्र विन्यसेत्[1] ।
वसुपत्रेषु चाज्येन पूरितान्नव दीपकान् ॥ ४ ॥
भ्रामयेद्ब्रह्मविद्याभिर्धृत्वा धृत्वा[2] तु मस्तके ।
मूलेन वा स्मरेदन्ते सर्वविघ्नोपशान्तये ॥ ५ ॥
समस्तचक्रचक्रेशीयुते देवि नवात्मिके ।
आरार्तिकमिदं दिव्यं गृहाण मम सिद्धये ॥ ६ ॥
मण्डलं वामतः कुर्यात्साधको भूमिजानुमान् ।
वहत्पुटेन हस्ताभ्यां मण्डलोद्धारलक्षणम् ॥ ७ ॥
चतुरस्त्रे व्योमचक्रं मन्त्रेणानेन पूजयेत् ।
तारं च भुवनेशानी व्यापकादि च मण्डलम् ॥८॥

१ "वैन्यसेत्" इति पा० ।

२ "त्रिधाधृत्वा तु मस्तके" इति पा० ।

ङेऽन्तं वाग्भवहृन्मन्त्रो मनुः सूर्याक्षरो भवेत् ।
अन्नोदमिश्रं भागेन साधारं पुष्पपूजितम् ॥ ९ ॥
संस्थाप्य पात्रं तत्रैव कलार्णेन बलिं हरेत् ।
तारं परा सर्वविघ्नकृद्भ्यः सर्वच भू लिखेत् ॥१०॥
तेभ्यो हुं वह्निजाया च त्रिवारोच्चारणाद्बलिः ।
पूर्वोक्तबलिदानं तु कुर्याद्विघ्नोपशान्तये ॥ ११ ॥
चतुर्धा वलिदानं तु त्रिषु लोकेषु दुर्लभम् ।
ततः कुमारीं संतर्प्य त्रिपुरेश्या ऽनयाऽथ वा ॥१२॥
मयूखान्परमेश्वर्याः सम्भाव्य मनुवित्तमः ।
खेचर्या शक्तिचक्रस्य स्वामिनीं सम्विदं पराम् ॥१३॥
योजयेदात्मविज्ञानगहने कृपया गुरोः ।
शिवकोणे शेषिकेभ्यो निर्माल्यं सिद्धये क्षिपेत् ॥१४॥
अर्घ्यपात्रं ततो देवि गुरवे संनिवेद्य च ।
नाममन्त्रेण च स्वस्थं तर्पयेदुपदेशतः ॥ १५ ॥
वाममार्गेण देवेशि तत्त्वमुद्राधरः शुचिः ।
पुनराधारगं कुर्यादाचारे दीपलक्षणम् ॥ १६ ॥
आरार्तिकस्य मध्यस्थं मूलेनैव तु भक्षयेत् ।
कपालिन्या वाऽपि पात्रं त्वया वाऽपि समुद्धरेत् ॥१७॥
द्वितीयं तत्त्वया दक्षे संयोगेनैव पार्वति ।

---

१ "गुरुमन्त्रवित्" इति पा० ।

तत्त्वत्रयेण संयोगात्तर्पयेत्स्वान्तवासिनीम् ॥ १८ ॥
प्रथमं ब्रह्मरूपत्वं द्वितीयं सर्वमन्त्रवित् ।
तृतीयमीशरूपत्वं विज्ञेयं मनुवित्तमैः ॥ १९ ॥
किञ्चिदुल्लास्य मुद्राभिः पञ्चभिः परमेश्वरि ।
श्रीगुरोराज्ञया देवि स्वयं श्रीत्रिपुरा भवेत् ॥ २० ॥
अधोमुखानि सर्वाणि पात्राण्यग्नौ प्रतिष्ठयेत् ।
आकृष्य मन्त्रांस्तत्रस्थान् शेषिकाभ्यो ऽक्षतादिकम् २१
दत्वा तु परमेशानि सुखी भूयान्न संशयः ।
अनिर्वाच्यमविविज्ञेयमक्षरैः कथितं मया ॥ २२ ॥
जलाक्षरेण न्यायेन चन्द्रदीपेन च प्रिये ।
गोपितव्यं त्वया भद्रे जननीजारगर्भवत् ॥ २३ ॥

इतिश्रीदक्षिणामूर्तिसंहितायां बलियजनविधिर्नाम षष्टितमः पटलः ॥ ६० ॥

## अथैकषष्टितमः पटलः ।

पार्वत्युवाच--

होमादि सूचितं देव सम्यग् विस्तारितं नहि ।
साधकानां हिताय त्वं सिद्ध्यर्थं कथय प्रभो ॥ १ ॥

